BIBLIOTHECA INDICA:

A

COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL.

NEW SERIES, No 1204.






# कर्म्मप्रदीपः ।

## ( छन्दोगपरिशिष्टापरनामधेयः । )

# KARMAPRADIPA

## OR CHANDOGA-PARISISTA

WITH THE COMMENTARY CALLED PARISISTA-PRAKASA OF
MAHAMAHOPADHYAYA NARAYANOPADHYAYA

EDITED BY

MAHAMAHOPADHYAYA CHANDRAKANTA TARKĀLANKĀRA

TOGETHER WITH A COMMENTARY BY HIMSELF CALLED PRABHA

FASCICULUS I.

Calcutta:

PRINTED BY UPENDRA NATHA CHAKRAVARTI, AT THE SANSKRIT PRESS,

AND PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL, 57, PARK STREET.

1909.

# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

# ASIATIC SOCIETY OF BENGAL.

No. 57, PARK STREET, CACUTTA,

AND OBTAINABLE FROM

THE SOCIETY'S AGENTS, Mr. BERNARD QUARITCH,

11, Grafton Street, New Bond Street, London, W., and Mr. Otto HARRASSOWITZ, BOOKSELLER, LEIPZIG, GERMANY.

*Complete copies of those works marked with an asterisk * cannot be supplied.—some of the Fasciculi being out of stock.*

## BIBLIOTHECA INDICA.

### *Sanskrit Series*

| | | |
|---|---|---|
| *Advaita Brahma Siddhi, Fasc. 2, 4 @ /10/ each ... ... Rs. | 1 | 4 |
| Advaitachintā Kaustubha, Fasc. 1-3 @ /10/ each ... ... .. | 1 | 14 |
| *Agni Purāṇa, Fasc. 3-14 @ /10/ each ... ... ... ... | 7 | 8 |
| Aitarēya Brāhmaṇa, Vol. I, Fasc. 1-5; Vol. II, Fasc. 1-5; Vol. III. Fasc. 1-5, Vol. IV, Fasc. 1-8 @ /10/ each ... ... ... | 14 | 6 |
| Aitereya Lochana. ... ... ... ... ... | 2 | 0 |
| *Aṇu Bhāṣhya, Fasc. 2-5 @ /10/ each ... ... ... | 2 | 8 |
| Aphorisms of Sāṇḍilya, (English) Fasc. 1 @ 1/- ... ... ... | 1 | 0 |
| Aṣṭasāhasrikā Prajñāpāramitā, Fasc. 1-6 @ /10/ each ... ... | 3 | 12 |
| *Atharvana Upanishad, Fasc. 3-5 @ /10/ each ... ... ... | 1 | 14 |
| Atmatattaviveka, Fasc. I. @ /10/ each ... ... ... ... | 0 | 10 |
| Açvavaidyaka, Fasc. 1-5 @ /10/ each ... ... ... ... | 3 | 2 |
| Avadāna Kalpalatā, (Sans. and Tibetan) Vol. I, Fasc. 1-6; Vol. II. Fasc. 1-5 @ 1/ each .. ... ... ... | 11 | 0 |
| A Lower Ladakhi version of Kesarsaga. Fasc. 1-3 @ 1/- each ... ... | 3 | 0 |
| Bālam Bhaṭṭī, Vol. I, Fasc. 1-2, Vol 2, Fasc. 1 @ /10/ each ... ... | 1 | 14 |
| Baudhāyana S'rauta Sūtra, Fasc. 1-3 Vol. II, Fasc 1 @ /10/ each ... | 2 | 8 |
| *Bhāmati, Fasc. 4-8 @ /10/ each ... ... ... | 3 | 2 |
| Bhaṭṭa Dipikā Vol. I, Fasc. 1-5 @ /10/ each ... ... ... | 3 | 2 |
| Brahma Sutra, Fasc. 1 @ /10/ each ... ... ... ... | 0 | 10 |
| Bṛhaddēvatā Fasc. 1-4 @ /10/ each ... ... .. ... | 2 | 8 |
| Bṛhaddharma Purāṇa Fasc 1-6 @ /10/ each ... ... ... | 3 | 12 |
| Bodhicaryāvatāra of Cāntideva, Fasc. 1-5 @ /10/ each ... ... | 3 | 2 |
| Çatadūṣaṇī, Fasc. 1-2 @ /10/ each ... ... ... | 1 | 4 |
| Catalogue of Sanskrit Books and MSS., Fasc. 1-4 @ 2/ each ... ... | 8 | 0 |
| Çatapatha Brāhmaṇa, Vol I, Fasc. 1-7, Vol II, Fasc. I-5, Vol. III, Fasc. 1-7 Vol. 5, Fasc. 1-4 @ /10/ each ... ... ... | 14 | 6 |
| Ditto Vol. 6, Fasc. 7 ... ... ... ... | 1 | 4 |
| Çatasāhasrikā Prajñāpāramitā Part, I. Fasc. 1-12 @ /10/ each .. ... | 7 | 8 |
| *Caturvarga Chintāmaṇi, Vol. II, Fasc. 1-25; Vol. III. Part I, Fasc. 1-18. Part II, Fasc. 1-10. Vol. IV. Fasc. 1-6 @ /10/ each .. ... | 36 | 14 |
| Ditto Vol. 4, Fasc. 7 ... ... ... ... | 1 | 4 |
| Çlockavartika, (English) Fasc. 1-6 @ 1/4/ each ... ... ... | 7 | 8 |
| *Çrauta Sūtra of Āpastamba, Fasc. 9-17 @ /10/ each ... ... | 5 | 10 |
| Ditto Çānkhāyana, Vol. I, Fasc. 1-7; Vol. II, Fasc. 1-4, Vol. III, Fasc. 1-4 @ /10/ each; Vol 4, Fasc. 1 ... ... | 10 | 0 |
| Çri Bhāshyam, Fasc. 1-3 @ /10/ each ... ... ... ... | 1 | 14 |
| Dāna Kriyā kaumudī, Fasc 1-2 @ /10/ each .. ... ... | 1 | 4 |
| Gadadhara Paddhati Kālasāra Vol. I, Fasc. 1-7 @ /10/ each ... ... | 4 | 6 |
| Ditto Āchārasārah Vols. II, Fasc. 1-3 @ /10/ each ... | 1 | 14 |
| Gobhiliya Grihya Sutra, Fasc. 4-12 @ /10/ each ... ... ... | 5 | 10 |
| Ditto Vol. II. Fasc. 1 ... ... ... ... | 1 | 4 |
| Kāla Viveka, Fasc. 1-7 @ /10/ each ... ... ... ... | 4 | 6 |
| ...tantra, Fasc 1-6 @ /12/ each ... ... ... ... | 4 | 8 |
| ...Sāgara, (English) Fasc. 1-14 @ 1/4/ each ... ... | 17 | 8 |
| ...rāṇa, Fasc. 1-9 @ /10/ each ... ... ... ... | 3 | 2 |
| ...ara, (English) Fasc. 1-3 @ 1/- each ... ... ... | 3 | 0 |
| ...ara, Fasc. 3-6 @ /10/ each ... ... ... | 2 | 8 |
| ...rijāta, Fasc. 1-11 @ /10/ each ... ... ... | 6 | 14 |
| ...ya-pradīpōdyōta, Vol. I, Fasc. 1-9; Vol. II, Fasc. 1-12 Vol. III, ...6 @ /10/ each ... ... ... ... ... | 16 | 14 |
| ... Sangraha, Fasc. 1-3 @ /10/ each ... ... ... | 1 | 14 |
| ... (English) Fasc. 1-9 @ 1/- each ... ... | 9 | 0 |
| ... ... ... | 1 | 14 |

# कर्म्मप्रदीपः ।

## प्रथमप्रपाठके प्रथमः खण्डः ।

ॐ नमः सामवेदाय ।

श्रीगणेशाय नमः ।

## परिशिष्टप्रकाशस्यानुक्रमणिका ।

यस्याज्ञा जयति श्रुतिस्मृतिमयी यत्पादपाथोमयो-
धर्म्मः कैश्चिदुपास्यते सुकृतिभिर्गङ्गेत्यभिख्यां गतः ।
यं ज्योतिर्म्मयमन्तरुद्भवतमश्छेत्तुं पुरस्कुर्वते
सन्तः, पातु जगच्चतुर्मुखगिरामर्थः स देवो हरिः ॥ १ ॥
इह जगति वन्दितपादाः सदा नरेन्द्रैः पवित्रजन्मानः ।
वसुधासुधाभुजः कति नाभूवन् कान्तिविज्ञेयाः ॥ २ ॥
चरितमहति तेषामन्वये सोमपीथी
समजनि परितोषश्छन्दसां देहबन्धः ।
अलभत स हि विप्राच्छासनं तालवाटीं
तदिह भजति पूजामुत्तरा येन राढ़ा ॥ ३ ॥
तस्माच्चतुर्थखण्डं पिशाचखण्डं तथाच वापर्थी ऊन्नाजा* ।
द्विजवर्णादिकमपरं निःसृतमनघकुलस्थानम् ॥ ४ ॥

* वाप उन्ना, इति ख पुस्तके पाठः ।

जज्ञेऽथ भूवलयपावनहेतुरेकः
श्रौते विधौ सततनिर्म्मलधीप्रसारः ।
प्राक् पूजितो विबुधसंसदि धर्म्मनामा
नामानुरूपचरितः परितोषसूनुः ॥ ५ ॥

तस्मादजायत सदायतनं गुणानां
भद्रेश्वरो निखिलकोविदवन्दनीयः ।
मध्ये सतां स्थितिमतां प्रथमाभिधेयः
सेवाभिषिक्तहृदयः पदयोर्मुरारेः ॥ ६ ॥

तस्माद्गदाधर इति द्विजचक्रवर्त्ती
राजप्रतिग्रहपराङ्मुखमानसोऽभूत् ।
पुण्यानि केवलमहर्निशमर्ज्जयन् यः
शान्तश्चिराय समयङ्गमयाम्बभूव ॥ ७ ॥

तस्माद्भूषितसाब्धिभूमिवलयः शिष्योपशिष्यव्रजै-
र्विद्वन्मौलिरभूदुमापतिरिति प्राभाकरग्रामणीः ।
क्ष्मापालाज्जयपालतः स हि महाश्राद्धं * प्रभूतं महा-
दानस्थार्थिगणार्थनार्द्रहृदयः प्रत्यग्रहीत्पुण्यवान् ॥ ८ ॥

तस्यानुजः † सुकृतवानथ कृतसर्वस्वदक्षिणो बहुधा ।
उदियाय गोननामा गुरुरिव तन्त्रे पुराणज्ञः ॥ ९ ॥

शश्वद्विश्वजनीन ‡ निर्मलगुणे भूलोकवाचस्पतौ
प्रेङ्खत्कीर्त्तिसरित्प्रवाहनिवहप्रक्षालिताशामुखे ।

---

* महाश्राद्धे, इति क पुस्तके पाठः । ‡ विप्रजनीन, इति ख पुस्तके पाठः ।

† तस्यात्मजः, इति ख पुस्तके पाठः ।

यस्मिन् कृष्णपदैकलीनहृदये धर्म्माधिकारास्पदं
बिभ्राणे द्विजमन्दिराण्यधिवसन् निर्धूतदोषाः श्रियः ॥१०॥
जातस्ततः स्मृतिपुराणविदामुपास्य—
विद्यः प्रभाकरमतस्थितिलब्धकीर्त्तिः ।
नम्रः सतां सदसि मित्रजनेषु च श्री-
नारायणः सततकृष्णपरायणात्मा ॥ ११ ॥
छन्दोगपरिशिष्टस्य सर्व्वार्थालोकहेतवे ।
परिशिष्टप्रकाशाख्यश्चक्रे तेनैष * धीमता ॥

---

## प्रभाया अनुक्रमणिका ।

यस्मात् सर्व्वं यतः सर्व्वं यस्मिन् सर्व्वं प्रलीयते ।
यच्च सर्व्वंगतं सर्व्वं तन्महः समुपास्महे ॥
प्रत्यूहव्यूहविध्वस्त्यै ढुण्ढिराजमहं भजे ।
विश्वेशमन्नपूर्णाञ्च वन्दे बोधविवृद्धये ॥
महर्षिं गोभिलाचार्य्यं कात्यायनमृषिं तथा ।
परिशिष्टप्रणेतारं प्रणमामि प्रयत्नतः ॥
पित्रोर्गुरूणामङ्घ्रींश्च प्रणमामि मुहुर्मुहुः ।
यत्कृपालेशमात्रेण मम बोधलवोदयः ॥
छन्दोगपरिशिष्टस्य कात्यायनकृतेरियम् ।
व्याख्या कर्म्मप्रदीपस्य प्रभाख्या क्रियते मया ॥

---

* तेनैव, इति क पुस्तके पाठः ।

**अथाऽतो गोभिलोक्तानामन्येषाञ्चैव कर्म्मणाम्।**
**अस्पष्टानां विधिं सम्यग्दर्शयिष्ये प्रदीपवत्॥ १॥**

परिशिष्टप्रकाशः।

अथ वेदाध्ययनान्तरं गृहस्थाश्रमप्रवेशोन्मुखस्य माणवकस्य गोभिलोक्तानामाधानादिगृह्यकर्म्मणामन्येषाञ्च मन्वाद्युक्तकर्म्मणामस्पष्टानाम्।

"आसीन ऊर्द्ध्वः प्रह्वो वा नियमो यत्र नेदृशः"।

इत्यादीनां सम्यगनुष्ठानं दर्शयिष्ये। प्रदीपवत्। यथा प्रदीपोऽस्पष्टानि द्रव्याणि स्पष्टीकरोति तथाऽहमपि अस्पष्टस्पष्टीकरणात् प्रदीपतुल्य इति ग्रन्थकारस्य प्रदीपतुल्यता, ग्रन्थस्य वा। अतः-शब्दो हेत्वर्थे। यस्मादस्पष्टानि गोभिलाद्युक्तकर्म्माणि, तस्माद्-व्यक्तीकरोमि। अन्यथा विगुणगृहस्थकर्म्मानुष्ठानात्* माणवकः प्रत्यवायी भवेत्।

अथशब्दस्य मङ्गलार्थोऽपि। तथाचोक्तम्।

"ॐकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा।
कण्ठं भित्त्वा विनिर्यातौ तेन माङ्गलिकावुभौ"॥ इति॥ १॥

प्रभा।

इह खलु तत्रभवान् कात्यायनः छन्दोगकर्त्तव्यानां गृह्यकर्म्मणां अन्येषाञ्चास्पष्टानां स्पष्टीकरणार्थं छन्दोगपरिशिष्टापरनामधेयं कर्म्मप्रदीपाख्यमिमं ग्रन्थं रचयाञ्चकार। तस्येयमल्पग्रन्था वृत्ति-

* धर्म्मानुष्ठानात्,—इति ख पुस्तके पाठः।

रारभ्यते। व्याचिख्यासितस्य कर्म्मप्रदीपस्यायमादिमः श्लोकः अथात इत्यादिः।

तत्राथशब्द आर्षेयग्रन्थस्यादौ प्रयुज्यते। श्रुत्या च मङ्गलप्रयोजनोभवति। आनन्तर्य्यार्थो वा। वेदाध्ययनान्तरमिति तत्रार्थः। अतःशब्दो हेत्वर्थः। यस्मात् गोभिलोक्तानि कानिचित् गृह्यकर्म्माण्यस्पष्टानि, न च सर्व्वाणि छन्दोगकर्त्तव्याणि कर्म्माणि गोभिलेनोक्तानि, अत एतस्मात् कारणात्। वेदाध्ययनानन्तरं गृहस्थाश्रमं प्रविविक्षुणा छन्दोगब्रह्मचारिणा गृह्यकर्म्मादिपरिज्ञानार्थं गृह्यादिकमध्येतव्यम्। तत्र चास्पष्टानामन्येषाञ्च छन्दोगकर्त्तव्यानां कर्म्मणां विधौ सम्यगप्रदर्शिते कर्म्मणां सम्यक् परिज्ञानाभावेन कर्म्मणां वैगुण्यं, कर्त्तुश्चापराधः स्यात्। तस्मात् गोभिलोक्तानामन्येषाञ्च गोभिलीयकर्त्तव्यानामस्पष्टानां विधिं प्रदीपवत् सम्यग् दर्शयिष्ये। यथा मन्दान्धकारे अस्पष्टानि वस्तूनि प्रदीपः सम्यग् दर्शयति, तद्वदित्यर्थः।

अत्र च गोभिलोक्तानां कर्म्मणां छन्दोगकर्त्तव्यत्वस्याविवादात् अन्यान्यपि कर्म्माणि छन्दोगकर्त्तव्यान्येवेति विज्ञायते।

"प्रसिद्धार्थस्य सान्निध्ये योऽप्रसिद्धार्थ उच्यते।
स सन्निधानसामर्थ्यात्तज्जातीयोऽवगम्यते" ॥

इति न्यायात्। अपिचाहुः।

"संयोगो विप्रयोगश्च साहचर्य्यं विरोधिता।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः ॥

ऊर्द्ध्वन्तु त्रिवृतं कार्य्यं तन्तुत्रयमधोवृतम्।
त्रिवृतं चोपवीतं स्यात्तस्यैको ग्रन्थिरिष्यते ॥ २ ॥

---

"सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः" ॥

इति। अध्येतृसम्प्रदायप्रसिद्धिश्चैतमर्थमुपोद्वलयति। अध्येतारोहि ग्रन्थमिमं छन्दोगपरिशिष्टमित्याचक्षते। निबन्धारश्चैवम्। यथा खल्वग्रप्राये लिखितं दृष्ट्वा भवेदयमग्र इति मतिः, तथा प्रकृतेऽपि छन्दोगकर्त्तव्यप्राये पठितं छन्दोगकर्त्तव्यमेतदिति धीरुदेति। उदेति चेत्, न युज्यते विना कारणमुत्स्रष्टुम्। तथाच न्यायः। "प्राये वचनाच्च"—इति। तस्मात् छन्दोगकर्त्तव्यकर्म्मप्रवाहमध्ये यत्किञ्चिदन्यत् कर्म्मोपदिष्टं, तदपि छन्दोगकर्त्तव्यमित्यवधार्य्यते। तस्मात् पूर्व्वस्मिन् परस्मिंश्च कर्म्मप्रवाहे छन्दोगकर्त्तव्ये सति तन्मध्यपठितं किञ्चित् कर्म्माकस्माद्दैवार्द्धजरतीयन्यायेन छन्दोगानां न भविष्यति भविष्यति तु छन्दोगेतरेषामिति कुतोऽयमसदावेश इति न खल्वभिगच्छामि ॥ १ ॥

---

परिशिष्टप्रकाशः।

यज्ञोपवीतिना आचान्तोदकेन कृत्यमिति गोभिलेनोक्ता, पुनर्यज्ञोपवीतं कुरुते सूत्रं वस्त्रं वा अपि वा कुशरज्जुमेवेत्युक्तम्। अनेन यज्ञोपवीतं सूत्रमित्येतावन्मात्रमुक्तम्। गुणत्रिसराद्यभिधानेन तदेव व्यक्तीकरोति।

वामावर्त्तवलितसूत्रत्रयं त्रिगुणीकृत्य दक्षिणावर्त्तवलितं कार्य्यम्। एवं नव तन्तवः। तदेव त्रिसरमुपवीतं स्यात्। तस्य च त्रिसरस्यैको ग्रन्थिर्मुनिभिरिष्यते। तच्च सूत्रं कार्पासं कौशेयं च ब्राह्मणस्य।

तथाच मनुः,—

"कार्पासमुपवीतं स्याद्विप्रस्योर्द्धवृतं त्रिवृत्।
शणसूत्रमयं राज्ञो वैश्यस्याविकसूत्रकम्" ॥

बौधायनः,—

"कौशं सौत्रं त्रिस्त्रिवृतं यज्ञोपवीतमानाभेः"। कौशं क्रिमिकोशोत्थं त्रसरपट्टसूत्रादिमयम्। सौत्रं कार्पासम्। त्रिस्त्रिवृतं नवगुणं त्रिसरीकृतमित्यर्थः। "नव वै त्रिवृतः" इति श्रुतिः।

यच्च देवलवचनम्।

"कार्पासक्षौमगोवालशणवल्कतृणोद्भवम्।
सदा सम्भवतो धार्य्यमुपवीतं द्विजातिभिः" ॥

इति। तत्पूर्वपूर्वासम्भवे उत्तरोत्तरविधायकम्। तथा—

"यज्ञोपवीतं कुर्वीत सूत्राणि नवतन्तवः।
एकेन ग्रन्थिना तन्तुर्द्विगुणस्त्रिगुणोऽथवा" ॥

द्विगुण इति त्रिसरासम्भवे द्विसरमित्यर्थः।

यच्च पैठीनसिवचनम्।

"कार्पासमुपवीतं षट्तन्तु त्रिवृतं ब्राह्मणस्य, क्षौमं राजन्यस्य, आविकं वैश्यस्य"। तदपि नवतन्त्वसम्भवे तन्तुषट्कं विधत्ते।

त्रिवृतं त्रिसरमित्यर्थः। अथवा नवगुणं त्रिसरद्वयेन षट्तन्तुकमित्यर्थः। क्षौमं अतसीभवम्। एतेन, "उपवीतमयुग्मसरं विषमतन्तुकम्" इति गृह्यपरिशिष्टोक्तमपि स्पष्टीकृतम्। एतच्च सूत्रमयोपवीतधारणं वस्त्राभावे। तथाच निगमपरिशिष्टम्। "वाससा यज्ञोपवीतानि कुर्य्यात् तदभावे त्रिवृता सूत्रेण कुशमुञ्जवालशररज्जुभिर्वा"। वालोऽत्र गोवालो देवलवचनात्। अत्र च कुशशरगोवालादिषु गुणत्रिसरादिनियमो नास्ति। सूत्र एव तन्नियमोपदेशात्। अवघातादयस्तु व्रीहिधर्म्मत्वात् तत्कार्य्यकारियवेष्वपि कर्त्तव्याः। अत्र तु गुणत्रिसरादिकं यज्ञोपवीतान्तर्गतं न तु तद्धर्म्मः। पुरोडाशादिकं तु न यागपदार्थनिविष्टं किं तु द्रव्यमात्रम्। अन्यथा प्रधानस्यातिदेशाभावात् अनतिदेशापत्तेः। अन्ये त्वाहुः,—यज्ञोपवीतानीत्युत्तरीये गौणं तद्धर्म्मविन्यासप्राप्त्यर्थमिति ॥ २ ॥

---

प्रभा।

यज्ञोपवीतं कुरुते सूत्रं वस्त्रं वा अपिवा कुशरज्जुमेवेति गोभिलसूत्रे सूत्रं यज्ञोपवीतं कुरुते इत्येतावन्मात्रमुक्तम्। तदेव गुणसराद्यभिधानेन स्पष्टयति। त्रिवृदूर्द्धवृतमिति। त्रिगुणं कृत्वा ऊर्द्धवृतं कार्य्यं, तन्तुत्रयमधोवृतं त्रिवृतञ्च कार्य्यम्। एवं गुणत्रयस्य त्रिगुणीकरणेन नव तन्तवः सम्पद्यन्ते। तथाच गृह्यासंग्रहः।

"यज्ञोपवीतं कुर्व्वीत सूत्रेण नवतान्तवम्"।

इति। ऊर्द्ध्ववृतलक्षणमाह संग्रहकारः।

"करेण दक्षिणेनोर्द्धं गतेन त्रिगुणीकृतम्।
वलितं मानवैः सूत्रं शास्त्रे ऊर्द्ध्ववृतं स्मृतम्" ॥

इति। ऊर्द्धन्तु त्रिवृतं कार्य्यमिति पाठेऽप्ययमेवार्थः। वामावर्त्तवलितं सूत्रत्रयं त्रिगुणीकृत्य दक्षिणावर्त्तवृतं कार्य्यमिति परिशिष्ट प्रकाशः।

तदेवं त्रिसरमुपवीतं स्यात्। उपवीतमेव यज्ञसम्बन्धात् यज्ञोपवीतमित्युच्यते। तस्यैकोग्रन्थिरिष्यते छन्दोगाचार्य्यैः। केचित् किल प्रवरसंख्यया ग्रन्थिं कुर्व्वन्ति। एकोग्रन्थिरित्यनेन तत्रानुमतिर्दर्शिता। यच्चान्यैर्द्विगुणितं षट्तन्तुकस्योपवीतमुक्तम्। तच्छन्दोगेतरपरम्। शाखान्तरसूत्रकारत्वात्तेषाम्। एवं सूत्रशब्दोपादानात् तस्य च कार्पासे प्रसिद्धेः कार्पासमुपवीतं छन्दोगानाम्। एवमाचार्य्येण सूत्रं वस्त्रं वा इत्यभिधानात् सूत्राभावे वस्त्रस्य विधानावगतेः वस्त्राभावे सूत्रविधानमपि छन्दोगेतरपरं बोध्यम्।

अत्र यद्यपि सत्यामपि व्रीहीनवहन्तीति श्रुतौ व्रीहिकार्य्यकारिणि यवेऽप्यवघातादयः क्रियन्ते, तथापि यज्ञोपवीतकार्य्यकारिणि वस्त्रादौ न त्रिवृतादिनियमः। त्रिवृतादेर्यज्ञोपवीतपदार्थान्तर्निविष्टत्वेन यज्ञोपवीतधर्म्मत्वाभावात् अन्यत्र तदप्रसक्तेः। अवघातादीनां व्रीहिपदार्थान्तर्निविष्टत्वाभावेन व्रीहिधर्म्मत्वात् अवघातादिविधौ व्रीहिपदेन व्रीहियागावान्तरापूर्व्वसाधनस्य लक्ष्यमाणत्वाच्च यवे तदाचरणं युक्तमेव ॥ २ ॥

पृष्ठवंशे च नाभ्याञ्च धृतं यद्विन्दते कटिम्।
तद्धार्य्यमुपवीतं स्यान्नातोलम्बं* न चोच्छ्रितम्॥ ३॥

परिशिष्टप्रकाशः।

इदानीं दैर्घ्यमुपवीतस्याह।

पृष्टवंशनाभ्योर्धृतं सत् यत्कटिपर्य्यन्तं लम्बते तदुपवीतं धारयेत्। नातोऽधिकं लम्बमानं नापि ऊर्द्धं श्रितं ह्रस्वमितियावत्। एतच्च गोभिलीयानाम्। अन्येषां तु,

"स्तनादूर्द्ध्वमधोनाभेर्न्न कर्त्तव्यं कथञ्चन"।

इति देवलेनोक्तं प्रमाणमिति। "यज्ञोपवीतमानाभेः" इति बौधायनोक्तस्याप्येषैव व्यवस्था। स्नातकैश्च द्वे यज्ञोपवीते धार्य्ये।

तथाच वशिष्ठः,—

"स्नातकानां हि नित्यं स्यादन्तर्वासस्तथोत्तरम्।
यज्ञोपवीते द्वे यष्टिः सोदकश्च कमण्डलुः"॥ ३॥

प्रभा।

उपवीतस्य परिमाणमाह। पृष्ठवंशे चेति। यदुपवीतं पृष्ठवंशे नाभ्याञ्च धृतं सत् कटिं विन्दते लभते कटिपर्य्यन्तं लम्बते इत्येतत्। तदुपवीतं धार्य्यं, न पुनरतो लम्बं नाप्युच्छ्रितं ह्रस्वमित्यर्थः। परिमाणान्तरमाह गोभिलपुत्त्रो गृह्यासंग्रहे।

"स्तनादूर्द्ध्वमधोनाभेर्न्न कर्त्तव्यं कथञ्चन।
स्तनादूर्द्ध्वं श्रियं हन्ति अधोनाभेस्तपःक्षयः"॥

* नातिलम्बं, इति क ख ग पुस्तकेषु पाठः।

सदोपवीतिना भाव्यं सदा बद्धशिखेन च ।
विशिखोव्युपवीतश्च यत्करोति न तत्कृतम् ॥ ४ ॥

---

इति । यत् यदुपक्रम्य पठितं तत्तत्रैवाङ्गमिति न्यायात् न चोच्छ्रितमिति कात्यायनीयो निषेधस्तदुक्तकल्प एवाभिनिविशते, न गृह्यासंग्रहोक्ते कल्पे। एवं तदुक्तो नाभेरधःकरणनिषेधस्तदुक्त-एव कल्पेऽभिनिविशते, न कात्यायनोक्ते कल्पे इति द्रष्टव्यम् । तदनयोः परिमाणयोर्विकल्पः । कुतः ? द्वयोरेव स्वशाखोक्तत्वात् । यच्च, गोभिलपुत्त्रवचनमविदुषा नारायणोपाध्यायेन,

"स्तनादूर्द्ध्वमधोनाभेर्न कर्त्तव्यं कथञ्चन" ।

इति देवलोक्तं परिमाणं गोभिलीयव्यतिरिक्तविषयमित्युक्तम् । तदनादरणीयम् ॥ २ ॥

---

परिशिष्टप्रकाशः ।

कर्म्माङ्गत्वं यज्ञोपवीतस्य, "यज्ञोपवीतिना आचान्तोदकेन कृत्यम्," इति सूत्रात् । तथाच कर्म्मकालमात्रे धारणं नान्यदेति प्रसक्तावाह ।

सदोपवीतयुक्तेन बद्धचूड़ेन च भवितव्यम् । एतेन शिखाबन्धोपवीत-धारणयोः पुरुषार्थतोक्ता । ततश्चाधारणे प्रत्यवायः । पुरुषार्थतया सदा धारणात् कर्म्मकालेऽपि धारणोपपत्तेः किं कर्म्माङ्गता नास्त्ये-वेत्यत्राह । विशिख इत्यादि । शिखोपवीतरहितेन यत्कर्म्म कृतं, न तत्कृतम् । विगुणत्वेन फलासाधकत्वादित्यभिप्रायः । केवल-

पुरुषार्थत्वे हि दैवात्कर्म्मकालेऽधारणेऽपि कर्म्माविगुणमेव पुरुषस्तु प्रत्यवायी स्यात्। कर्म्माङ्गत्वे तु नैवम्। तदा च विगुणक्रतु-समाधाने यत्प्रायश्चित्तं तत्कर्त्तव्यमिति कर्म्माङ्गत्वोपदेशप्रयोजनम्। एतेन दधिखादिरादिवत् क्रतुपुरुषार्थतयोभयार्थतया द्व्यात्मकता उपवीतस्येत्युक्तम्। अतएव—

"पिबतो मेहतश्चापि भुञ्जतोऽनुपवीतिनः।

प्राणायामं त्रिधावद्धं नवकं त्रियुतं * क्रमात्" ॥

इत्यन्यत्रापि व्यक्तमुक्तं धारणम्। अतएव धनार्ज्जननियमस्य पुरुषार्थत्वे तदतिक्रमेण कृष्याद्यर्ज्जितधनेन क्रतुनिष्पत्तिरविगुणैव पुरुषस्तु नियमातिक्रमात् प्रायश्चित्तीयते। विशिख इत्यनेन च असत्यामपि शिखायां शिखाबन्धाभावे कर्म्मवैगुण्यं नतु सत्या-मेवेत्युक्तम् ॥ ४ ॥

---

प्रभा।

यज्ञोपवीतस्य कर्म्माङ्गत्वं "यज्ञोपवीतिनाचान्तोदकेन कृत्यम्" इति गोभिलसूत्रेणोक्तम्। एवञ्च कर्म्मकालादन्यत्र तस्य धारणं न प्राप्नोति, तत्राह। सदोपवीतिनेति। सर्व्वदा उपवीतिना सर्व्वदा बद्धशिखेन च पुरुषेण भवितव्यम्। अनेन यज्ञोपवीतधारणस्य शिखाबन्धनस्य च पुरुषार्थतोक्ता। ततश्च विपर्य्यये प्रत्यवायः स्यात्। तत् किं पुरुषार्थयोः शिखाबन्धनोपवीतधारणयोरवर्ज्ज-नीयतया कर्म्मकालेऽप्यनुवृत्तिरिति नैतयोः कर्म्मार्थत्वाशङ्कायाः

---

* मन्त्रं त्रिकयुतं. इति ग पुस्तके पाठः।

माह। विशिख इत्यादि। अबद्धशिखोऽनुपवीती च यत् कर्म्म करोति, तत् कृतं न भवति। विगुणतया सम्यक् फलाजनकत्वात् न तत् कृतमिति निन्दावादः। पूर्व्वार्द्धे पुरुषार्थतयोक्तयोः शिखाबन्धोपवीतधारणयोरुत्तरार्द्धे व्यतिरेके निन्दार्थवादमुखेन कर्म्मार्थतोक्तेर्विशिख इत्यस्य विशिखाबन्धन इत्यर्थः कल्प्यते। अन्यथा पूर्व्वापरसामञ्जस्यं न स्यात्। बद्धशिखिनेत्यत्र बद्धायाः शिखाया उपस्थितत्वात् बद्धा शिखैव वा विशिख इति शिखाशब्देन परामृश्यते। एतेन विशिख इत्यनेनासत्यामपि शिखायां शिखाबन्धाभावे कर्म्मवैगुण्यं न तु सत्यामेवेति परिशिष्टप्रकाशोक्तमसङ्गतम्। तथात्वे कर्म्माङ्गतया शिखाबन्धनवत् शिखाऽपि विधातव्येति वाक्यभेदश्चापद्येत। तदत्र पुरुषार्थयोरेव सतोः शिखाबन्धनोपवीतधारणयोः संयोगपृथक्त्वन्यायेन कर्म्मार्थत्वं न तु कर्म्मार्थमन्यत् यज्ञोपवीतं धार्य्यमित्युक्तम्। स्नातकानान्तु यज्ञोपवीतद्वयं धार्य्यमित्याह वशिष्ठः।

"स्नातकानां हि नित्यं स्यादन्तर्वासस्तथोत्तरम्।
यज्ञोपवीते द्वे यष्टिः सोदकश्च कमण्डलुः" ॥

इति। पुरुषार्थस्यैव यज्ञोपवीतधारणस्य कर्म्मार्थतया विधानात् तत्राप्येषैव गतिः। स्मरन्ति च।

"यज्ञोपवीते द्वे धार्य्ये श्रौतस्मार्त्तेषु कर्म्मसु।
तृतीयञ्चोत्तरीयार्थं वस्त्राभावे तदिष्यते" ॥

इति ॥ ४ ॥

त्रिः प्राश्यापो द्विरुन्मृज्य मुखमेतानुपस्पृशेत्।
आस्यनासाक्षिकर्णांश्च नाभिवक्षःशिरोऽंसकान् ॥५॥

---

परिशिष्टप्रकाशः।

आचान्तोदकेन कृत्यमिति गोभिलोक्तमाचमनमव्यक्तं व्यनक्ति। वारत्रयमपः प्रकर्षेण भक्षयेत्। भक्षणप्रकर्षश्च कर्मकरणकर्त्तृप्रकर्षात्। तत्र कर्म्मकर्षोऽनुष्णत्वाफेनत्वाबुद्बुदत्वहृदयगामित्वादिरूपः। कर्त्तृप्रकर्षश्च कृतपाणिपादशौचत्वासीनत्वप्राङ्मुखत्वादिरूपः। करणप्रकर्षश्चात्र ब्राह्मतीर्थत्वादिः। एवमपो भक्षयित्वा मुखं वारद्वयमूर्द्ध्वं लोमस्थाने मार्ज्जयेत्। न त्वलोमके। पुनराचमनेऽनवस्थाप्रसङ्गात्। तथाच परिशिष्टम्। "आचान्तः पुनराचामेत्। वासश्च परिधायोष्ठौ संस्पृश्य यत्रालोमकौ"। मार्ज्जनं चाङ्गुष्ठमूलेन, लिखिष्यमाणदक्षवचनात्। एतेन "उदगग्नेरुत्सृप्य प्रक्षाल्य पाणी पादौ चोपविश्य त्रिराचामेत् द्विः परिमृजीत पादावभ्युक्ष्य शिरोऽभ्युक्षयेत्' इति गोभिलेनोक्तम् वारद्वयमार्ज्जनं मुखस्य वारत्रयभक्षणमपां स्फुटीकृतम्।

अत्र च उदगग्नेरुत्सृप्येति कर्म्माङ्गाचमनमेव वारत्रयमित्युक्तम्। ततश्च "त्रिश्चतुर्वा अप आचामेत्"—इति गौतमोक्तं वारचतुष्टयमाचमनमदृष्टार्थकर्म्मसु व्यवस्थितमिति यत्कैश्चिदुक्तं तन्निरस्तम्। आचान्तोदकेन कृत्यमिति कर्म्माङ्गस्यैवाचमनस्य उदगग्नेरुत्सृप्य इत्यादिना विवेचनात्। ततश्च त्रिः प्राशिता यदि हृदयगान भवन्ति तदा चतुर्व्वेति बहुभिरुक्ता व्यवस्था। भाव-

शुद्धापेक्षयेति कल्पतरूक्ता व्यवस्था। "इन्द्रियाण्यद्भिः संस्पृशेत् अक्षिणी नासिके कर्णाविति यद्यन्मीमांस्यं स्यात् तदद्भिः स्पृशेत्" इत्युक्तं गोभिलेन। तदव्यक्तं व्यक्तीकरोति। एतानि वक्ष्यमाणानि समीपे स्पृशेत्। न तु तत्तत्स्थाने। समलत्वात्। आस्यादीनां समासेनैकपदेनोपादानं तेषां सोपसर्जनस्पृशतिसम्बन्धार्थं, नाभ्यादीनाञ्च पृथक्समासेनोपादानं स्पृशतिमात्रसम्बन्धार्थम्। अयं चास्यादिक्रमो-दक्षोक्त इत्यङ्गुलीनियमोऽपि स एव ग्राह्यः। तथाहि दक्षः—

"अनेनैव विधानेन आचान्तः शुचितामियात्।
प्रक्षाल्य पाणी पादौ च त्रिः पिबेदम्बु वीक्षितम्" ॥

अनेन वक्ष्यमाणेन।

"संहत्याङ्गुष्ठमूलेन द्विः प्रमृज्यात्ततो मुखम्।
संहत्य तिसृभिः पूर्वमास्यमेवमुपस्पृशेत्"।

मुखं संहत्य ततः प्रमृज्यादित्यर्थः। एवमिति संहत्येत्यर्थः।

"अङ्गुष्ठेन प्रदेशिन्या घ्राणम्पश्चादनन्तरम्।
अङ्गुष्ठानामिकाभ्याञ्च चक्षुःश्रोत्रे पुनःपुनः ॥
नाभिं कनिष्ठाङ्गुष्ठेन हृदयं तु तलेन वै।
सर्वाभिस्तु शिरः पश्चाद्बाहू चाग्रेण संस्पृशेत्" ॥

तिसृभिः पूर्वमास्यं स्पृष्ट्वाऽङ्गुष्ठप्रदेशिनीभ्यां पश्चात् घ्राणं, अनन्तरं चक्षुषी श्रोत्रे पुनःपुनरित्यर्थः ॥ ५ ॥

---

प्रभा।

"आचान्तोदकेन कृत्यम्" इति गोभिलोक्तमाचमनं व्यक्ती-करोति त्रिः प्राश्येति।

वारत्रयमुदकं भक्षयित्वा वारद्वयं मुखमुन्मृज्य वक्ष्यमाणान् मुखचक्षुर्नासिकाकर्णान् नाभिवक्षःस्थलशिरोऽंसांश्च उपस्पृशेत्। एतेन "इन्द्रियाण्यद्भिः संस्पृशेदक्षिणी नासिके कर्णाविति" इति गोभिलसूत्रमुपन्यासमात्रपरं न क्रमपरमिति स्पष्टीकृतम्। इतिशब्दविवक्षितोऽर्थश्च प्रदर्शितः। यद्यपि "त्रिराचामेत् द्विः परिमृजीत पादावभ्युक्ष्य शिरोऽभ्युक्षयेत्" इति गोभिलसूत्रे द्विः परिमार्ज्जनानन्तरं इन्द्रियस्पर्शाच्च पूर्व्वं पादशिरोऽभ्युक्षणमुक्तम्। तथापि तस्य स्पष्टत्वादत्र तन्नोक्तम्। कस्याञ्चिदवस्थायां तदन्तरेणाप्याचमननिष्पत्त्यर्थं वा।

मार्ज्जनादावङ्गुलिनियमो दक्षेण दर्शितः। यथा।

"अनेनैव विधानेन आचान्तः शुचितामियात्।
प्रक्षाल्य पाणी पादौ च त्रिः पिबेदम्बु वीक्षितम्॥
संवृत्याङ्गुष्ठमूलेन द्विः प्रमृज्यात्ततोमुखम्।
संहत्य तिसृभिः पूर्व्वमास्यमेवमुपस्पृशेत्॥
अङ्गुष्ठेन प्रदेशिन्या घ्राणं पश्चादनन्तरम्।
अङ्गुष्ठानामिकाभ्याञ्च चक्षुःश्रोत्रे पुनः पुनः॥
नाभिं कनिष्ठाङ्गुष्ठेन हृदयन्तु तलेन वै।
सर्व्वाभिश्च शिरः पश्चाद्बाहू चाग्रेण संस्पृशेत्"॥

इति। क्वचित् क्वचित् कर्म्मप्रदीप एवैतस्मिन्नवसरे वचनान्येतानि पठ्यन्ते। संवृत्येत्यनेन मुखं संवृतं कृत्वा सलोमकस्थानं स्प्रष्टव्यम्। अन्यथा—

प्रभा ।

"आचान्तः पुनराचामेद्वासो विपरिधाय च ।
ओष्ठौ संस्पृश्य च तथा यत्र स्यातामलोमकौ" ॥

इति वशिष्ठेनालोमकोष्ठस्पर्शे आचमनविधानेन तदनवस्थापातात् । न चैतत् परकीयत्वादनाचरणीयमिति वाच्यम् । स्मृत्युक्तस्य परकीयत्वानुपपत्तेः । स्मृत्युक्तमपि स्वशास्त्रविरुद्धं नाचरणीयमेव । न चात्र तथा । अपिच, दक्षः किल स्मृतिकाराणां परिशिष्टकारकस्य इति नैवात्र किमपि शङ्कितव्यं भवति । तथाच दक्षेणैवोक्तम्—

"उक्तं कर्म्म क्रमो नोक्तो न कालो मुनिभिः स्मृतः ।
द्विजानान्तु हितार्थाय दक्षस्तु स्वयमब्रवीत्" ॥

इति । न कालस्तत एव हि—इति द्वितीयचरणे पाठान्तरम् । आचमने विशेषो गृह्यसूत्रात् यथासम्भवं स्मृत्यन्तरेभ्यश्चावगन्तव्यः । ग्रन्थगौरवभयादिह न लिखितः । अत्र गृह्यसूत्रे च वारत्रयं जलपानविधानात्, "त्रिश्चतुर्वा अप आचामेत्" इति गौतमसूत्रं गोभिलीयव्यतिरिक्तविषयम् । यत्तु उपस्पृशेदिति वचनात् इन्द्रियास्युप समीपे संस्पृशेत् न रन्ध्रस्थाने समलत्वात् इति नारायणोपाध्यायेनोक्तम् । तदसङ्गतम् । "इन्द्रियाण्यद्भिः संस्पृशेत्" इति गोभिलसूत्रविरोधात् । समलत्वेऽपि वचनात् स्पर्शे दोषकल्पनानुपपत्तेः । सामान्यस्य विशेषेतरपरत्वोपपत्तेः । "देहाच्चैव च्युता मलाः"—इति स्मृतेर्देहच्युतानामेव मलत्वेन देहस्थितानां मलत्वाभावाच्च । आस्यादीनां समासेनैकपदेनोपादानं तेषां सोपसर्ग-

यत्रोपदिश्यते कर्म कर्त्तुरङ्गं न तूच्यते।
दक्षिणस्तत्र विज्ञेयः कर्म्मणां पारगः करः ॥ ६ ॥

परिशिष्टप्रकाशः।

आचमनादिकर्म्माङ्गप्रसङ्गादन्यदपि साधारणमङ्गमाह— यत्र स्मृत्यादौ कर्म्म कर्त्तव्यत्वेनोच्यते कर्त्तुः पुनः सव्यं दक्षिणं वाऽङ्गं नोच्यते। तत्र दक्षिणपाणिः कर्माङ्गतया ज्ञातव्यः। यस्मादसौ साङ्गकर्म्मनिष्पादकतया पारगः। सव्येन तु विगुणं कर्म्मेति। एतेन गोभिलोक्तकर्म्मसु वलिदानहोमादिषु अन्योक्तेषु च अनुपदिष्टकर्त्रङ्गविशेषेषु अङ्गविशेषनियमेनानुष्ठानं स्फुटीकृतम् ॥ ६ ॥

प्रभा।

स्मृतिसम्बन्धार्थं, नाभ्यादीनां पृथक्समासेनोपादानं स्मृतिमात्रसम्बन्धार्थमित्यपि तस्य कल्पनामात्रं प्रमाणाभावादनुपादेयम्। कुत्रचित् सोपसर्गस्य कुत्रचिच्चोपसर्गं विहाय धातुमात्रस्य सम्बन्धश्च न क्वापि दृष्टचरः। वचनविरोधश्चैवमवर्ज्जनीयः स्यात्। तस्मादुपेत्युपसर्गो धात्वर्थमनुवर्त्तते। अतएव केनापि मुनिना संग्रहकारेण च नैव विशेषोऽभिहितः ॥ ५ ॥

अथेदानीं गोभिलानुक्तमतएवास्पष्टं कञ्चित् विधिमुपदिशति कर्म्मोपदिश्यते इत्यादिभिस्त्रिभिः। यत्रैतत् कर्त्तव्यमिति कर्म्मोपदिश्यते कर्त्तुस्त्वङ्गविशेषः सव्यो दक्षिणो वा नोच्यते, तत्र होमवलिहरणादौ कर्म्मणां पारगामी सर्व्वकर्म्मकरणसमर्थोदक्षिणः करो विज्ञेयः। तत्र दक्षिणः करः कर्म्मणां पारगोविज्ञेयइति वाऽर्थः ॥६॥

यत्र दिङ्नियमो नास्ति जपहोमादिकर्म्मसु ।
तिस्रस्तत्र दिशः प्रोक्ता ऐन्द्री सौम्याऽपराजिताः ॥७॥
आसीन ऊर्द्ध्वः प्रह्वो वा नियमो यत्र नेदृशः ।
तदासीनेन कर्त्तव्यं न प्रह्वेन न तिष्ठता ॥ ८ ॥

---

परिशिष्टप्रकाशः ।

अपरमपि साधारणमङ्गमाह—

यत्र जपादिकर्म्मोक्तं, तेषु कर्म्मसु दिग्विशेषमुखतानियमो-नोक्तः, तत्र पूर्व्वा उत्तरा ऐशानीति तिस्रो दिशो मुनिभि-रुक्ताः ॥ ७ ॥

यत्र उपविष्ट उत्थितोऽवनतपूर्व्वकायः कुर्य्यादित्येतादृशो-ऽनियमो नास्ति तत्कर्म्मोपविष्टेन कर्त्तव्यम् । नापद्यपि प्रह्वेन उत्थितेन कर्त्तव्यमित्यर्थः ॥ ८ ॥

---

प्रभा ।

अपरमपि साधारणमङ्गमाह—

यत्र दिङ्नियमो नास्तीति । यत्र कर्म्मणि दिङ्नियमो नास्ति कर्त्तुर्दिग्विशेषमुखता नोक्ता, तत्रैन्द्री सौम्याऽपराजिता-स्तिस्रोदिशो मुनिभिः प्रोक्ताः । श्रेया इति पाठे ज्ञातव्या-इत्यर्थः । तथाचैतासां दिशामन्यतमदिङ्मुखता कर्त्तुर्बोद्धव्या । ऐन्द्री प्राची, सौम्या उत्तरा, अपराजिता ऐशानी । तथाच गृह्यासंग्रहः—

गौरी पद्मा शची मेधा सावित्री विजया जया।
देवसेना स्वधा स्वाहा मातरो लोकमातरः॥ (क)॥
धृतिः पुष्टिस्तथा तुष्टिरात्मदेवतया सह।
गणेशेनाधिका ह्येता वृद्धौ पूज्याश्चतुर्द्दश॥ (ख)॥

---

प्रभा।

"प्रक्रमेऽपि तथोद्वाहे होमे स्विष्टकृते तथा।
यस्यां दिशि विधिं प्राहुस्तामाहुरपराजिताम्" ॥

इति॥ ७॥

आसीन इति। यस्मिन् कर्म्मणि आसीन ऊर्द्धः प्रह्वो वा कुर्य्यादित्येतादृशो नियमो नोक्तः, तत् कर्म्म आसीनेन कर्त्तव्यं न प्रह्वेन न वा तिष्ठता। आसीन उपविष्टः। ऊर्द्धो दण्डवत् स्थितः। प्रह्वोऽवनतपूर्व्वकायः। तिष्ठता दण्डवत् स्थितेन॥ ८॥

प्रसङ्गाद्वक्ष्यमाणोपयोगिनं कञ्चिदर्थमाह गौरी पद्मेति द्वाभ्याम्—

गणेशसहिता एताश्चतुर्द्दश मातरो वृद्धावाधानादौ पूजनीयाः। चतुर्द्दशेत्युपादानात् मातरो लोकमातर इति सर्व्वासां विशेषणम्। एता मातरो लोकमातर इत्यर्थः। वृद्धौ पूज्याश्च षोड़श इति पाठे मातरो लोकमातर इति स्वतन्त्रं देवताद्वयम्। तदिदं श्लोकद्वयं सर्व्वेषु पुस्तकेषु दृष्टत्वात् कमलाकरेण छन्दोगपरिशिष्टनाम्ना लिखितत्वाद् व्याख्यातत्वाच्चास्माभिर्व्याख्यातम्। नारायणोपाध्यायेन तु नैतत् पठितं न वा व्याख्यातम्॥ (क) (ख)॥

कर्म्मादिषु च सर्व्वेषु मातरः सगणाधिपाः ।
पूजनीयाः प्रयत्नेन पूजिताः पूजयन्ति ताः ॥ ९ ॥
प्रतिमासु च शुभ्रासु लिखिता* वा पटादिषु ।
अपि वाऽक्षतपुञ्जेषु नैवेद्यैश्च पृथग्विधैः ॥ १० ॥

परिशिष्टप्रकाशः ।

अपरमपि साधारणं कर्म्माङ्गमाह—

सर्व्ववैदिककर्म्मारम्भात्पूर्व्वं गणपतिसमेता गौर्य्यादिमातरः प्रयत्नतो-भक्तिश्रद्धाभ्यां पूजयितव्याः । पूजाफलमाह । ताः पूजिताः पूजाकर्त्तारमभ्युदयसम्पादनेन प्रीणयन्ति ॥ ९ ॥

पूजास्थानानि तदुपकरणानि चाह—

प्रतिकृतिषु शुभ्रासु रजतस्फटिकादिमयीषु । शुद्धास्विति पाठे-

प्रभा ।

न केवलं वृद्धौ, किन्तर्हि, कर्म्मादिषु चेति । सर्व्वेषु च कर्म्मादिषु गणाधिपसहिता गौर्य्यादिमातरः प्रयत्नेन भक्तिश्रद्धातिशयेन पूजनीयाः । पूजितास्ता मातरः पूजयितारं पूजयन्ति अभ्युदय-सम्पादनेन प्रीणयन्ति यतः, अतः पूजनीया इति पूजाफलवादः । सर्व्वेष्वित्यस्यापवादो वक्ष्यते । तदनेन, सर्व्वाण्येवान्वाहार्य्यवन्तीति गोभिलसूत्रेण कर्म्मादौ यदन्वाहार्य्यश्राद्धमुक्तं तन्मातृपूजादिपूर्व्वकं करणीयमिति स्पष्टीकृतम् ॥ ९ ॥

पूजायां विशेषमाह प्रतिमास्विति । शुभ्रासु स्फटिक-

* लिखिता—इति पाठान्तरम् ।

कुद्यलग्नां वसोर्धारां सप्तधारां घृतेन तु।
कारयेत् पञ्चधारां वा नातिलम्बां न चोच्छ्रिताम् ॥११॥

---

परिशिष्टप्रकाशः।

ऽप्ययमेवार्थः। अयं मुख्यकल्पः। अनुकल्पमाह। पटादिष्वित्यादिः। वर्णकलिखिता वा। आपत्कल्पमाह। यवपुञ्जेष्वपि वा। मातरः पूजनीया इत्यनुषङ्गः। निवेदनीयैश्च नानाविधैर्गन्धपुष्पधूपदीपपायसमोदकापूपकादिभिः। चकारो भक्तिश्रद्धासमुच्चये ॥ १० ॥

तदनन्तरञ्च—

भित्तिसंसक्तां घृतेन सप्तधारां बहुघृतासम्भवे पञ्चधारां, वसोश्चेदिराजस्य तदुद्देशप्रवृत्तत्वेन सम्बन्धिनीं, नातिदीर्घां नातिह्रस्वां वा कुर्य्यात्। वसोश्च सर्वोत्सवप्रवर्त्तकत्वेन मङ्गलहेतुत्वात् विवाहपुत्रजन्मादिमङ्गले पूजा युक्तेति। वसोरग्नेर्वा ॥ ११ ॥

---

प्रभा।

रजतादिनिर्म्मितासु प्रतिमासु मातरः पूजनीया इत्यनुषज्यते। पटादिषु वर्णकैर्लिखिताश्चित्रिता वा मातरः पूजनीयाः। अथवा, अक्षतपुञ्जेषु यवपुञ्जेषु मातरः पूजनीयाः। "अक्षतास्तु यवाः प्रोक्ताः" इत्युक्तेः। पृथग्विधैर्नानाविधैर्नैवेद्यैर्निवेदनीयैर्गन्धपुष्पधूपादिभिर्विविधैर्भक्ष्यैश्च मातरः पूजनीयाः ॥ १० ॥

मातृपूजानन्तरं यत् कर्त्तव्यं, तदाह, कुद्यलग्नामिति। भित्तिसंसक्तां सप्तधारां पञ्चधारां वा नातिनीचां नातिह्रस्वां नात्युच्छ्रितां नातिदीर्घां च, वसोश्चेदिराजस्याग्नेर्वा, तदुद्देशेन

आयुष्याणि च शान्त्यर्थं जप्त्वा तत्र समाहितः ।
षड्भ्यः पितृभ्यस्तदनु श्राद्धदानमुपक्रमेत् ॥ १२ ॥

परिशिष्टप्रकाशः ।

आयुषे हितानि अमङ्गलनाशाय जप्त्वा । तत्र कर्म्मादौ । मातृपूजावसुधाराऽऽयुष्यजपेभ्योऽनन्तरं पित्रादिभ्यो मातामहादिभ्यश्च त्रिभ्यः श्राद्धदानमारभेत । एतच्च वृद्धिश्राद्धं वैदिककर्म्मस्यादौ कर्त्तव्यम् । तदङ्गं च । तथाच शातातपः—

"नानिष्ट्वा तु पितॄन् श्राद्धे कर्म वैदिकमारभेत्" ।

भविष्यपुराणञ्च—

"निषेककाले सोमे च सीमन्तोन्नयने तथा ।
ज्ञेयं पुंसवने चैव श्राद्धं कर्माङ्गमेवच" ॥

एतच्च वैदिककर्म्ममात्रोपलक्षणम् । फलवत्सन्निधावफलं

प्रभा ।

प्रवृत्तत्वात् तत्संबन्धिनीमित्येतत्, घृतेन धारां कारयेत् कुर्य्यात् । स्वार्थिको णिच् ॥ ११ ॥

वसोर्धारायाः करणादनन्तरं कृत्यमाह आयुष्याणीति । आयुष्याणि आयुषे हितानि आयुर्वृद्धिकराणि, आ नोभद्राः क्रतव इत्यादिसूक्तानि इति मदनपारिजातः । तानि च तैत्तिरीयशाखायां पठ्यन्ते । शान्त्यर्थममङ्गलनाशार्थं समाहितोऽविक्षिप्तचित्तः तत्र कर्म्मादौ जप्त्वा, तदनु तदनन्तरं षड्भ्यः पितृभ्यः पित्रादिभ्यः त्रिभ्यः मातामहादिभ्यश्च त्रिभ्यः श्राद्धदानमारभेत ।

परिशिष्टप्रकाशः।

तदङ्गमिति न्यायस्याविशेषात्। लौकिके तु कर्म्मणि न वैदिकस्य श्राद्धस्याङ्गता। किन्तु तच्छ्राद्धस्य निमित्तमात्रम्। निमित्तानन्तरञ्च नैमित्तिकम्। अतः पुत्रजन्माद्युत्तरकालमेव सूर्य्यग्रहादिनिमित्तकश्राद्धवत् वृद्धिश्राद्धमिति स्थितम्। अतएव मार्कण्डेयपुराणम्—

"नैमित्तिकमथो वक्ष्ये श्राद्धमभ्युदयात्मकम्।
पुत्रजन्मनि तत्कार्य्यं जातकर्म्मसमं नरैः" ॥

एतदपि पुत्रमुखदर्शनाद्युपलक्षणार्थम्। अनुपादेयत्वाप्रधानत्वयोरविशेषात्। एतेन सर्वास्वेवान्वाहार्य्यवत्स्विति सूत्रोक्तमन्वाहार्य्यपदं मातृपूजादिभ्योऽन्वाक्रियमाणत्वात् वृद्धिश्राद्धपरमिति स्पष्टीकृतम्। अतएव,—

"यच्छ्राद्धं कर्म्मणामादौ या चान्ते दक्षिणा भवेत्।
अमावास्यां द्वितीयं यदन्वाहार्य्यं तदुच्यते" ॥

इति गृह्यान्तरम्। पिण्डपितृयज्ञरूपश्राद्धात् द्वितीयं श्राद्ध-

---

प्रभा।

अथ तदनु इति निर्द्देशो लेखशैली। नात्र पुनरुक्तिराशङ्कनीया। क्रमविशेषार्थो वा। कथं नाम? कृतायुष्यजपस्यैव श्राद्धदानेऽधिकारी न त्वकृतायुष्यजपस्येति। षड्भ्य इत्युपादानात् छन्दोगानां मात्रादिश्राद्धं नास्ति। वक्ष्यति च—

"न योषिद्भ्यः पृथग्दद्यादवसानदिनादृते"।

परिशिष्टप्रकाशः ।

मित्यर्थः । तथा च गोभिलः । "अन्वष्टक्यस्थालीपाकेन पिण्ड-पितृयज्ञो व्याख्यातः । अमावास्यायान्तच्छ्राद्धमितरदन्वाहार्य्यं मासीनम्" । वृद्धिश्राद्धे च पितॄणान्नान्दीमुखविशेषणविशिष्टानां दैवतात्वम् । तथा विष्णुपुराणम्*—

"कन्यापुत्रविवाहे च प्रवेशे नववेश्मनः ।
नामकर्म्मणि बालानां चूड़ाकर्मादिके तथा ॥
सीमन्तोन्नयने चैव पुत्रादिमुखदर्शने ।
नान्दीमुखं पितृगणमर्च्चयेत् प्रयतो गृही" ॥

ब्रह्मपुराणम्—

"कर्म्मण्यथाभ्युदयिके मङ्गल्यवति शोभने ।
जन्मन्यथोपनयने विवाहे पुत्रकस्य च ॥
पितॄन्नान्दीमुखान्नाम तर्पयेद्विधिपूर्व्वकम्" ।

गोभिलेनापि, नान्दीमुखाः पितरः प्रीयन्तामिति दैवे वाचयित्वा नान्दीमुखेभ्यः पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यः†

---

प्रभा ।

इति । पितृभ्य इति पितृपदस्य सम्बन्धिशब्दतया पदिन्यायात् यजमानपित्रादिपरिग्रहः । तेन यजमानपित्रादीनां, न तु,—

"पिता पितामहश्चैव तथैव प्रपितामहः ।
त्रयो ह्यश्रुमुखा ह्येते पितरः परिकीर्त्तिताः ॥

---

* भविष्यपुराणे, इति ख पुस्तके पाठः ।

† पितृपितामहप्रपितामहेभ्यः इति ख पुस्तके पाठः ।

परिशिष्टप्रकाशः।

मातामह-प्रमातामह-वृद्धप्रमातामहेभ्यश्च प्रीयन्तामित्युक्तम्।
यद्यपि,—

"पिता पितामहश्चैव तथैव प्रपितामहः।
त्रयो ह्यश्रुमुखा ह्येते पितरः परिकीर्त्तिताः।
तेभ्यः पूर्व्वतरा ये च प्रजावन्तः सुखैधिताः॥
ते तु नान्दीमुखा नान्दी समृद्धिरिति कथ्यते"।

तथा,—

"ये स्युः पितामहादूर्द्धं ते स्युर्नान्दीमुखास्त्विति।
प्रसन्नमुखसंज्ञास्तु मङ्गलीया यतस्तु ते"।

इति ब्रह्मपुराणवचनात्—प्रसन्नमुखतारूपं नान्दीमुखत्वं प्रपितामहपित्रादीनां त्रयाणामेव। ये स्युः पितामहादूर्द्धमित्यत्रापि पितामहपदं प्रपितामहपरम्। तेभ्यः पूर्व्वतरा ये च

---

प्रभा।

तेभ्यः पूर्व्वतरा ये च प्रजावन्तः सुखैधिताः।
ते तु नान्दीमुखा नान्दी समृद्धिरिति कथ्यते॥
कर्म्मण्यथाभ्युदयिके माङ्गल्यवति शोभने।
जन्मन्यथोपनयने विवाहे पुत्रकस्य च॥
पितृन्नान्दीमुखान् नाम तर्पयेद्विधिपूर्व्वकम्"।

इति ब्रह्मपुराणवचनात् प्रपितामहपित्रादीनां श्राद्धम्। वक्ष्यति च—

परिशिष्टप्रकाशः ।

इत्येतद्दर्शनात् । ततश्च तेषामेव वृद्धिश्राद्धे देवतात्वं युक्तम् । तथापि षड्भ्यः पितृभ्यः इति यजमानपितृणामेव प्रतीतेर्देवतात्वं युक्तम् । तथाच—

"स्वपितृभ्यः पिता दद्यात् सुतसंस्कारकर्म्मसु" ।

इति स्पष्टमेवोक्तम् । स्वपदस्य प्रपितामहपित्रादिव्यावर्त्तकतयैव सार्थकत्वात् । तथा, नान्दीमुखाः पितरः प्रीयन्तामिति पितामहाः प्रपितामहामातामहाश्च प्रीयन्तामिति कात्यायनवचने, नान्दीमुखेभ्यः पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यः मातामहेभ्यः प्रमातामहेभ्यः वृद्धप्रमातामहेभ्यश्च प्रीयन्तामिति गोभिलसूत्रे च, यजमानस्यैव पित्रादयः सम्बन्धिशब्दत्वात् मातामहसमभिव्याहाराच्च गम्यन्ते । नान्दीमुखता च तेषामेवा-

---

प्रभा ।

"स्वपितृभ्यः पिता दद्यात् सुतसंस्कारकर्म्मसु" ।

इति । स्वपदस्यात्र प्रपितामहपित्रादिव्यावर्त्तकतयैव सार्थकम् । अन्यथाऽनर्थकत्वापत्तेः । किन्तु पित्रादीनां नान्दीमुखविशेषणविशिष्टानामेवात्र देवतात्वम् । श्राद्धकल्पे, नान्दीमुखाः पितर इत्यादि निर्द्देशात् । एवं तत्रैव नान्दीमुखेभ्यः पितृभ्यः पितामहेभ्य इत्यादि निर्द्देशात् ।

"नान्दीमुखे विवाहे च प्रपितामहपूर्व्वकम् ।
वाक्यमुच्चारयेद्विद्वानन्यत्र पितृपूर्व्वकम्" ॥

इति वृद्धशिष्टोक्तवाक्यरचनापि गोभिलीयानां न भवति ।

परिशिष्टप्रकाशः।

रोपात् माणवकस्येवाग्नित्वम्। मङ्गल्ये च विवाहपुत्रजन्मादौ अश्रुमुखानाममाङ्गलिकानां श्राद्धसन्निधौ आरोपादपि माङ्गलिक-नान्दीमुखशब्देन निर्द्देशो युक्तः। अतएवामाङ्गलिक-कपालादि-शब्दवाच्ये आरोपादपि अमङ्गलपरिहाराय भगालादिशब्दं श्री-कामज्ञानादिवाचक-भगपदयुक्तं मुनयः प्रयुञ्जते। एवमायुष्य-मन्त्रजपोऽपि शान्त्यर्थमुपपन्नो भविष्यति। अतएव—

"पठेत् छन्दांसि सूक्तन्तु स्वस्तिसूक्तं शुभं तथा"।

इति ब्रह्मपुराणेऽपि स्वस्त्ययनार्थं सूक्तजपोपदेश एवमुपपन्नो-भविष्यति। क्वचित्सत्यस्य च क्वचिदारोपात् आरोपार्थमेव वास्तवं नान्दीमुखत्वं ब्रह्मपुराणे दर्शितम्।

केचित्तु शाखाविशेषव्यवस्थितो ब्रह्मपुराणीयः पक्ष इत्याहुः।

---

प्रभा।

सर्व्वं एतत् श्राद्धकल्पभाष्यादौ विवेचितमस्माभिस्तत्रैवानुसन्धेयम्। ग्रन्थगौरवभयादिह नोच्यते। यच्चोक्तं नारायणोपाध्यायेन, स्व-जनकादीनां देवतात्वावगतेस्तेषामेवारोपेण नान्दीमुखत्वं माण-वकस्याग्नित्ववत्। माङ्गलिके विवाहादावमाङ्गलिकानामश्रु-मुखानामारोपेणाऽपि माङ्गलिकनान्दीमुखपदेन निर्द्देशो युक्तः। अतएवामाङ्गलिककपालादिशब्दवाच्ये अमङ्गलपरिहाराय आरो-पादपि श्रीकामज्ञानादिवाचकभगपदयुक्तं भगालादिशब्दं मुनयः प्रयुञ्जते। क्वचित् सत्यस्यैवान्यत्रारोपात् आरोपार्थमेव वास्तवं नान्दीमुखत्वं ब्रह्मपुराणे दर्शितम्,—इति। सेयं कल्पना रमणीया।

वशिष्ठोक्तोविधिः कृत्स्नो द्रष्टव्योऽत्र निरामिषः ।
अतः परं प्रवक्ष्यामि विशेष इह यो भवेत् ॥ १३ ॥

प्रथमः खण्डः ।

---

परिशिष्टप्रकाशः ।

जीवत्पित्रादित्रयव्यवस्थित इत्यपरे । तदयुक्तम् । स्वपितृभ्यः पिता दद्यादित्यस्मिन् वचने पितृभाव एव सुतस्य वृद्धिश्राद्धविधानात् । त्रिषु जीवत्सु नैवेति विष्णुना पार्व्वणश्राद्धनिषेधात् । तद्विकृतित्वात् च वृद्धिश्राद्धस्येति । यतएवारोपितं नान्दीमुखत्वम्, अतएव,—

"मातामहेभ्यश्च तथा नान्दीवक्त्रेभ्य एव च" ।

इति ब्रह्मपुराणे मातामहानामपि नान्दीमुखत्वमुक्तम् । तथा कात्यायनेन नान्दीमुखाः पितरः प्रीयन्तामित्यादिना, गोभिलेन च, नान्दीमुखेभ्यः पितृभ्यः इत्यादिना मातामहानामपि नान्दीमुखत्वमुक्तम् ॥ १२ ॥

कया परिपाट्या श्राद्धं कर्त्तव्यमित्याह—

वशिष्ठेन छान्दोग्यगृह्यपरिशिष्टे यः पार्व्वणविधिरुक्तः सोऽत्र

---

प्रभा ।

वचनार्थस्त्वेवं न भवति । कुतः ? ब्रह्मपुराणे वृद्धप्रपितामहादीनां नान्दीमुखसंज्ञामभिधाय कर्म्मण्यथाभ्युदयिके इत्यादिना परस्तेषामेव श्राद्धोपदेशात्तथाविधकल्पनानुपपत्तेः ॥ १२ ॥

अन्वाहार्य्यश्राद्धस्येतिकर्त्तव्यतां वक्तुमुपक्रमते वशिष्ठोक्त इति ।

परिशिष्टप्रकाशः ।

सर्व्वं चामिषपर्य्युदासेन द्रष्टव्यः । अतोऽनन्तरं वशिष्ठोक्ताद्विधेर्योऽत्र श्राद्धे विशेषो भवेत्, तं सम्यग्वक्ष्यामि । मधु चात्र दातव्यम् एव—

"शाल्यन्नं दधिमध्वक्तं बदराणि यवांस्तथा ।
मिश्रीकृतानि चत्वारि पिण्डान् श्रीफलसन्निभान्" ॥

इति ब्रह्मपुराणवचनात् ॥ १२ ॥

प्रथमखण्डः ।

---

प्रभा ।

श्राद्धकल्पे वशिष्ठेन पार्व्वणश्राद्धे यो विधिरुक्तः, स कृत्स्नोविधि-रामिषपर्य्युदासेनास्मिन् श्राद्धे द्रष्टव्यः । अस्मिन् श्राद्धे तस्माद्विधे-र्यो विशेषो भवेत्, तं विशेषमतः परं प्रकर्षेण कथयिष्यामि । श्राद्धकल्पः किल वशिष्ठप्रणीत इति तत्रभवतो भट्टनारायणस्य मतं लक्ष्यते । 'अन्योऽपि प्रातमन्वितानित्येवमादिको विशेषः कर्म्मप्रदीपाद्वाशिष्ठाच्च श्राद्धकल्पादुपलब्धव्यः'—इति गोभिलभाष्ये तेनोक्तत्वात् । अत्रामिषपर्य्युदासेन वशिष्ठोक्तस्य कृत्स्नस्य विधे-रतिदेशात् मधुनोऽपि देयता प्रतीयते । कलौ तावच्च भवति—

"अक्षता गोपशुश्चैव श्राद्धे मांसं तथा मधु ।
देवराच्च सुतोत्पत्तिः कलौ पञ्च विवर्ज्जयेत्" ॥

इति मयूखादौ निगमवचनात् ॥ १२ ॥

इति प्रथमः खण्डः ।

---

## द्वितीयः खण्डः ।

प्रातरामन्त्रितान् विप्रान् युग्मानुभयतस्तथा ।
उपवेश्य कुशान्दद्यादृजुनैव हि पाणिना ॥ १ ॥

---

### परिशिष्टप्रकाशः ।

विशेषमाह—

प्रथमघटिकात्रये आमन्त्रितान् युग्मब्राह्मणान् । दैवे पित्रे च तथा पार्व्वणवत् प्राङ्मुखान् दैवे उदङ्मुखान् पित्रे उपवेश्य ऋजुनैव हस्तेन कुशानासने दद्यात् ॥ १ ॥

---

### प्रभा ।

प्रतिज्ञातं विशेषमाह प्रातरिति । प्रातरामन्त्रितान् युग्मान् ब्राह्मणान् उभयतः दैवपक्षे पितृपक्षे च तथा पार्व्वणवदेव दैवे प्राङ्मुखान् पित्रे चोदङ्मुखानुपवेश्य । ऋजुनैवावक्रेणैव हस्तेन कुशान् दद्यात् । पार्व्वणे श्राद्धे पूर्व्वदिने तदहर्वा ब्राह्मण-निमन्त्रणमुक्तम् । अत्र तु पूर्व्वदिने निमन्त्रणं न भवति । किन्तु श्राद्धदिने प्रातः । एवं पार्व्वणे पित्रे अयुग्मा ब्राह्मणा उक्ताः, अत्र तु तत्रापि युग्माः । पार्व्वणे पितृतीर्थेन दानमुक्तम् । अत्र तु ऋजुना हस्तेन देवतीर्थेनेत्यर्थः ॥ १ ॥

हरिता यज्ञिया दर्भाः पीतकाः पाकयज्ञियाः ।
समूलाः पितृदैवत्याः कल्माषा वैश्वदेविकाः ॥ २ ॥

---

परिशिष्टप्रकाशः ।

कुशान् दद्यादित्युक्तेर्यादृशाः कुशाः कर्म्माङ्गभूतास्तानाह—

दर्शादियज्ञार्था हरिताः, पाकयज्ञार्थाः पीतवर्णाः, पितृदैवतकर्मार्थाः समूलाः, विश्वदेवश्राद्धार्थास्तिलकोपेताः । कुशा उत्पाद्या इति शेषः । कल्माषाश्चैव दैविका इति कल्पतरुपाठः । तदा च व्यक्त एवार्थः । अत्र च प्रसङ्गाद्यज्ञाद्यर्था अप्युक्ताः ॥ २ ॥

---

प्रभा ।

कुशान् दद्यादिति प्रसङ्गेन यस्मिन् कर्म्मणि यादृशाः कुशा भवन्ति तदाह हरिता इति । हरिता दर्भा दर्शादियज्ञार्हाः । पीतवर्णा दर्भाः पाकयज्ञार्हाः । पितृदैवत्या दर्भाः समूला मूलसहिताः । पितृकर्म्मणि समूला इत्यर्थः । विश्वदेवार्था दर्भाः कल्माषास्तिलकोपेताः कृष्णपाण्डरा इति यावत् । कल्माषाश्चैव दैविका इति लक्ष्मीधरः पठति । तदाव्यक्त एवार्थः । ननु के इमे पाकयज्ञा नाम ? तत्र व्याख्यातारो विवदन्ते । केचिदाहुः । पाकाङ्गकयज्ञा इति । पक्वयज्ञा इत्येके । प्रशस्तयज्ञा इत्यन्ये । अल्पयज्ञा इत्यपरे । देवयज्ञादय इति केचित् । वयं तु ब्रूमः । एकाग्नौ ये यज्ञास्ते पाकयज्ञाः । कस्मात् ? “पाकयज्ञानित्याचक्षते एकाग्नौ यज्ञान्” इति सूत्रकारवचनात् ॥ २ ॥

हरिता वै सपिञ्जूलाः शुष्काः स्निग्धाः समाहिताः ।
रत्निमात्राः प्रमाणेन पितृतीर्थेण संस्कृताः ॥ ३ ॥

परिशिष्टप्रकाशः ।

पित्र्यर्थानां वर्णपरिमाणादीन्याह—

सपिञ्जूलाः प्रादेशमात्रार्द्धशुष्कान्यतरशीर्णपुष्पमञ्जरीसहिताः, स्थूलपत्राः, कोमलाः, समाहिता नेतस्ततो विच्छिन्नपर्णाः, कृत-मुष्टिहस्तप्रमाणाः, पितृतीर्थसंयोगसंस्कृताः, पितृकर्म्मण्युपादेया इति शेषः । रत्निप्रमाणता च पिण्डास्तरणार्थानामेव । आसना-ऽर्घ्योल्मुकाद्यर्थानान्तु गोकर्णप्रमाणता । तथाच वायुपुराणम्—

"रत्निप्रमाणाः शस्ता वै पितृतीर्थेन संस्कृताः ।
उपमूले तथा लूनाः प्रस्तरार्थे कुशा मताः *" ॥

ब्रह्मपुराणे—

"हरिताश्च सपिञ्जूलाः स्निग्धाः पुष्टाः समाहिताः ।
गोकर्णदीर्घास्तु कुशाः सकृच्छिन्नाः समूलकाः ॥
पितृतीर्थेन देयाश्च दूर्वा श्यामाकमेव च ।
काशाः कुशावस्वजाश्च तथाऽन्ये तीक्ष्णरोमशाः ॥
मौञ्जाश्च शाद्वलाश्चैव षड्दर्भाः परिकीर्त्तिताः" ॥

प्रभा ।

हरिता इति । हरिताः हरिद्वर्णाः सपिञ्जूलाः मञ्जरीसहिताः साग्रा वा । पुष्टाः स्थूलपत्राः । स्निग्धाः कोमला अकर्कशा इति

* कुशोत्तमाः, इति ख पुस्तके पाठः ।

पिण्डार्थं ये स्तृतादर्भास्तर्पणार्थं तथैव च।
धृतैः कृते च विण्मूत्रे त्यागस्तेषां विधीयते ॥४॥

परिशिष्टप्रकाशः।

तीक्ष्णरोमशा इति वल्वजानां विशेषणम्। तेन, तेषामलाभे शूकतृणशरशीर्य्यवल्वजसुतवनलसुण्ठवर्जं सर्वतृणानीति गोभिलोक्तेन तद्व्यतिरिक्तवल्वजानां निषेधो बोद्धव्यः। गोकर्णपरिमाणञ्च, प्रादेशतालगोकर्णा इत्यभिधानकोषे प्रतिपादितम्। मुख्यकुशाभावे दूर्वादीनां ग्रहणम्। तदभावे सर्व्वतृणानीति गोभिलेनोक्तत्वात्। अतएव, कुशाभावे कुशस्थाने काशं दूर्वां वा दद्यादिति विष्णुः ॥ ३ ॥

त्याज्यान् कुशानाह—

पिण्डास्तरणे ये कुशाः, ये च तर्पणार्थं, यैश्च धृतैर्विण्मूत्रे कृते, तेषां त्यागः कर्त्तव्यः। ते कर्म्मसु न योज्या इत्यर्थः। अन्येऽपि ये त्याज्यास्तान् आह लघुहारीतः—

प्रभा।

यावत्। समाहिता निर्दोषाः इतस्ततोऽविच्छिन्नपत्रा वा। रत्निमात्राः कृतमुष्टिहस्तो रत्निः, तत्परिमाणाः। पितृतीर्थेन तत्संयोगेन संस्कृताः। त इमे दर्भाः पितृकर्म्मणि बोद्धव्याः ॥ ३ ॥

त्याज्यान् दर्भानाह पिण्डार्थमिति। पिण्डदानार्थं ये दर्भाः स्तृताः, पितृतर्पणार्थं ये गृहीताः। धृतैरित्युपलक्षणे तृतीया। यैर्धृतैर्दर्भैरुपलक्षितेन पुंसा विण्मूत्रे कृते, तेषां सर्व्वेषां दर्भाणां

परिशिष्टप्रकाशः।

"चितौ पथि च ये दर्भा ये दर्भायज्ञभूमिषु।
स्तरणासनपिण्डेषु षट्कुशान् परिवर्ज्जयेत्॥
नीवीमध्ये तु ये दर्भा यज्ञसूत्रे च ये कृताः।
पवित्रांस्तान्विजानीयाद्यथा कायस्तथा कुशाः"॥

एतच्च धृतैः कृते चेत्यस्यापवादकं—

"पिण्डार्थे ये स्तृतादर्भा यैः कृतं पितृतर्पणम्।
मूत्रोच्छिष्टे धृता ये च तेषां त्यागो विधीयते"॥

इत्येतदनन्तरं लघुहारीतेन नीवीमध्ये इत्युक्तत्वात्। त्याज्यश्रुति-

---

प्रभा।

त्यागो विधीयते। नैव ते कर्म्मसु विनियोज्या इत्यर्थः। ननु पिण्डार्थं स्तृतानां दर्भाणां पितृतर्पणार्थं गृहीतानाञ्च त्याज्यत्वे तेषु पिण्डदानं तैः पितृतर्पणञ्च न स्यात्। नैष दोषः। तथात्वे स्तृतानां पिण्डार्थत्वस्य, गृहीतानां तर्पणार्थत्वस्य चानुपपत्तेः। तस्मात् येषु दर्भेषु पिण्डदानं यैश्च पितृतर्पणं कृतं तेषां कर्म्मान्तरेषु त्याज्यत्वमुच्यते, न तत्तत्कर्म्मस्वपि त्याज्यत्वमुच्यते। तथा सति दर्भेषु पिण्डदानस्य दर्भैः पितृतर्पणस्य चोपदेशः प्रमत्तगीतं स्यात्। एतस्मादवगम्यते, एकत्र विनियुक्तानामपि दर्भाणामन्यत्र विनियोगोऽस्तीति। तथाच गृह्यपरिशिष्टम्—

"दर्भाः कृष्णाजिनं मन्त्रा ब्राह्मणा हविरग्नयः।
अयातयामान्येतानि नियोज्यानि पुनः पुनः"॥

परिशिष्टप्रकाशः।

रिक्तास्तु विनियुक्ता अपि विनियोज्याः। तथाच गृह्यपरिशिष्टम्—

"दर्भाः कृष्णाजिनं मन्त्रा ब्राह्मणा हविरग्नयः।
अयातयामान्येतानि नियोज्यानि पुनःपुनः"॥

इति। यातयामं जीर्णं, तत् यन्न भवति तदयातयामं सवीर्य्यं कार्यक्षममिति यावत्। अत्र मरीच्युक्तो विशेषः—

"मासे नभस्यमावस्या तस्यां दर्भोच्चयोमतः।
अयातयामास्ते दर्भा विनियोज्याः पुनःपुनः"॥

इति॥ ४॥

---

प्रभा।

इति। मरीचिः—

"मासे नभस्यमावस्या तस्यां दर्भचयो मतः।
अयातयामास्ते दर्भा विनियोज्याः पुनः पुनः"॥

इति। एतस्माद्वचनात् श्रावणामावस्यायामाहृतानामेव दर्भाणामयातयामतया पुनः पुनर्विनियोज्यत्वमिति बहुसम्मता व्यवस्था। केचित्तु गृह्यपरिशिष्टवचनात् सामान्यत एव दर्भाणामयातयामत्वम्। मरीचिवचनन्तु—

"कदाचिन्नाहरेद्विद्वान् प्रसूते केशवे कुशान्।
अभावे तु समुद्धृत्य परेऽहनि विवर्ज्जयेत्"॥

इत्यस्यापवादकमित्याहुः। लघुहारीतस्त्वन्येषामपि केषाञ्चिद्दर्भाणां परिवर्ज्जनमाह। तद्यथा—

दक्षिणं पातयेज्जानु देवान् परिचरन् सदा।
पातयेदितरज्जानु पितॄन् परिचरन्नपि ॥ ५ ॥

परिशिष्टप्रकाशः।

विशेषान्तरमाह—

पार्व्वणे वसिष्ठोक्ते देवार्थश्राद्धे देवान् परिचरन् दक्षिणजानुपातनं कुर्य्यात्। पितॄन् पुनस्तदर्थश्राद्धकरणे परिचरन् वामं जानु पातयेदिति ॥ ५ ॥

प्रभा।

"चितौ दर्भाः पथि दर्भा ये दर्भा यज्ञभूमिषु।
स्तरणासनपिण्डेषु षड्दर्भान् परिवर्ज्जयेत्" ॥

इति। तथा तत्रैव—

"पिण्डार्थं ये स्तृता दर्भा यैः कृतं पितृतर्पणम्।
मूत्रोच्छिष्टैर्धृता ये च त्यागस्तेषां विधीयते ॥
नीवीमध्ये च ये दर्भा ब्रह्मसूत्रे च ये धृताः।
पवित्रांस्तान् विजानीयात् यथा कायस्तथा कुशाः" ॥

इति। यैः कृतं पितृतर्पणमित्यभिधानात् यैर्देवतादितर्पणं कृतं तैः पितृतर्पणकरणे त्वदोषः। नीवीमध्ये चेति वचनं मूत्रोच्छिष्टैर्धृता ये चेत्यस्यापवादकम्। मूत्रोच्छिष्टैर्धृता ये चेत्यत्र मूत्रोच्छिष्टप्रलेपे चेति क्वचित् पाठः ॥ ४ ॥

दक्षिणमिति। पार्व्वणे दैवं कर्म्म कुर्व्वन् दक्षिणं जानु पातयेत् भूमौ स्थापयेत्। पित्र्यं कर्म्म कुर्व्वन् सव्यं जानु पातयेत्।

निपातो न हि सव्यस्य जानुनो विद्यते क्वचित्।
सदा परिचरेद्भक्त्या पितृनप्यत्र देववत्॥ ६॥
पितृभ्य इति दत्तेषु उपवेश्य कुशेषु तान्।
गोत्रनामभिरामन्त्र्य पितृनर्घ्यं प्रदापयेत्॥ ७॥

---

परिशिष्टप्रकाशः।

अत्र वामजानुपातनं क्वचिदपि नास्ति। किं तर्हि, पितृंश्च देववत् परिचरेत्, सदा यावत्प्रयोगमित्यर्थः॥ ६॥

पूर्व्वमासने कुशदानमुक्तं, तत्पितृनुद्दिश्य दातव्यं न ब्राह्मणानित्याह—

इति—ऋजुनैव हि पाणिनेत्युक्तप्रकारेण, पितृभ्यो दत्तेषु

---

प्रभा।

सदाशब्देन पितृकर्मान्तःपातिनि दैवकर्म्मण्यपि दक्षिणजानुपातमुपदिशति॥ ५॥

प्रासङ्गिकमभिधाय प्रकृतमाह निपात इति। अत्रेति पराचीनं पूर्व्वत्राप्यनुषज्यते। अत्राभ्युदयिकश्राद्धे क्वचिदपि पितृकर्म्मण्यपि सव्यजानुपातो न कर्त्तव्यः। किन्तु अत्र पितृनपि भक्त्या देववत् परिचरेत्। पितृकर्म्मापि दक्षिणजानुपातेनात्र कर्त्तव्यमित्यर्थः। सदेति प्रयोगपरिसमाप्तिपर्य्यन्तमेवं कर्त्तव्यमित्युपदिशति॥ ६॥

ब्राह्मणानुपवेश्य ऋजुनैव पाणिना कुशान् दद्यादित्युक्तम्।

परिशिष्टप्रकाशः ।

कुशेषु, तान् ब्राह्मणानुपवेश्य गोत्रनामभिः सम्बोध्य पितॄनर्घ्यं-मर्घ्यपात्रस्थजलादि दापयेत् दद्यादित्यर्थः । तेन सम्बोधनान्तेन गोत्रनामनी उच्चार्ये इत्युक्तं भवति ॥ ७ ॥

---

प्रभा ।

कुशदानप्रकारमाह पितृभ्य इति । पार्व्वणे पितृभ्यः स्वधेत्यनेन अत्र तु नमःपदादिना दत्तेषु कुशेषु तान् ब्राह्मणानुपवेश्य गोत्र-नामभिः पितॄनामन्त्र्य संबोध्य अर्घ्यं प्रदापयेत् दद्यात् । स्वार्थे णिच् । पितॄणां बहुत्वात् गोत्रनामभिरिति बहुवचनम् । पित्रादि-संबन्धिपदोल्लेखसंग्रहार्थं वा । तदत्र पितृभ्य इति दत्तेषु इति सुस्पष्टमभिधानात् कुशदानमतिक्रम्यार्घ्यदाने गोत्रनामभिरामन्त्र-णोपदेशाच्च पितृभ्य इत्यनेनैव कुशा देयां नात्र गोत्रनामभिरा-मन्त्रणम् । तथा च व्यासः—

"चतुर्थी चासने नित्यं सङ्कल्पे च विधीयते ।
प्रथमा तर्पणे प्रोक्ता संबुद्धिमपरे जगुः" ॥

इति नित्यमासनदाने चतुर्थीमाह । तदिदं वाक्यं छान्दोगा-नामप्यादरणीयम् । तेषां हि तर्पणे प्रथमाऽनुशिष्यते सम्बुद्धिश्चान्ये-षाम् । यत्तु नारायणोपाध्यायेन व्याख्यातम्, इति ऋजुनैव हि पाणिना इत्युक्तप्रकारेण पितृभ्यो दत्तेषु कुशेषु इति । तदसङ्ग-तम् । इतिशब्दस्यानर्थकत्वापत्तेः । पितृभ्य इत्यस्य चानतिप्रयो-जनतापत्तेः । पितृभ्यो हि श्राद्धं दीयते । त्यागवाक्यप्रकारोप-

प्रभा।

देशपरत्वे त्वस्य न किमप्यनर्थकम्। यथाश्रुतार्थपरित्यागे मानाभावाच्च। शब्दस्य श्रवणमात्रात् योऽर्थोऽवगम्यते स श्रुत्याऽवगम्यते इति हि शास्त्रतात्पर्य्यविदो वदन्ति। स चार्थो न युज्यते विना कारणमुत्स्रष्टुम्। श्रुतेर्बलवत्त्वात्। एतेन, इति इत्यनेन गोत्रनामभिरामन्त्र्य इति प्रक्रंस्यमानप्रकारेण पितृभ्यो-दत्तेषु कुशेषु इति तत्त्वकृतां व्याख्यानमप्यसङ्गतं वेदितव्यम्। इतिशब्दस्य प्रक्रंस्यमानपरामर्शकत्वस्यादृष्टचरत्वाच्च। तथा स्नानसूत्रपरिशिष्टम्—

"गोत्रं स्वरान्तं सर्व्वत्र गोत्रस्याक्षय्यकर्म्मणि।
गोत्रस्तु तर्पणे प्रोक्तः कर्त्ता एवं न मुह्यति॥
सर्व्वत्रैव पितः प्रोक्तं पिता तर्पणकर्म्मणि।
पितुरक्षय्यकाले च कर्त्ता एवं न मुह्यति॥
शर्म्मन्नर्घ्यादिके कार्य्ये शर्मा तर्पणकर्मणि।
शर्म्मणोऽक्षय्यकाले च कर्त्ता एवं न मुह्यति"॥

इति। तदत्र शर्म्मन्नर्घ्यादिके कार्य्ये इत्युपसंहृतत्वात् पूर्ववचनद्वयोक्तस्य सर्व्वत्र पदस्यापि अर्घ्यादिके कार्य्ये सर्व्वत्रेत्यर्थपर्य्यवसानादर्घ्यदानात् पूर्व्वं कुशासनदाने गोत्राद्युल्लेखो-नास्तीत्युक्तं भवति। सामान्यस्य विशेषेतरपरत्वञ्च स्थितमेव। तदेवं पितृभ्य इति दत्तेषु इत्यस्य यथाश्रुतार्थपरित्यागेनाश्लिष्टार्था-न्तरकल्पनायां न केवलं प्रमाणाभावः, किन्तु प्रमाणविरोधो-ऽपीत्यवधेयम्॥ ७॥

नात्रापसव्यकरणं न पित्र्यं तीर्थमिष्यते ।
पात्राणां पूरणादीनि दैवेनैव हि कारयेत् ॥ ८ ॥

परिशिष्टप्रकाशः ।

विशेषान्तरमाह—
पार्व्वणवत् नात्र प्राचीनावीतित्वकरणं न च पित्र्यं तीर्थं जल-गन्धादिदानाय मुनिभिरिष्यते । किं तर्हि, अर्घ्यपात्राणां जलेन पूरणं, आदिशब्दात्तत्रैव गन्धादिदानं, बहुवचनादन्नोत्सर्गादि यावदेव पित्रर्थं कर्म्म, दैवेनैव तीर्थेन कुर्यात् । एवकारः,

"नान्दीमुखानां कुर्व्वीत प्राज्ञः पिण्डोदकक्रियाम् ।
प्राजापत्येन तीर्थेन यच्च किञ्चित्प्रजापतेः" ॥

इति मार्कण्डेयपुराणोक्तप्राजापत्यतीर्थव्यावृत्त्यर्थः । उपवीतित्वम-प्यत्र कर्त्तव्यम् । यथा ब्रह्मपुराणम्—

"तिलार्थे तत्र विकिरेत्प्रशस्तांश्च तथा यवान् ।
सर्व्वं यज्ञोपवीती तु न कुर्य्यात् अपसव्यकम्" ॥

कारयेदित्यादिप्रयोजकनिर्द्देशस्तु परोपदेशपक्षे अन्यद्वाराऽपि पार्व्वण-

प्रभा ।

नात्रेति । पार्वणवदपसव्यकरणं पित्र्यं तीर्थञ्चात्राभ्युदयिके मुनिभिर्नेष्यते । अर्घ्यपात्राणां जलेन गन्धादिना च पूरणम्, आदिशब्दादन्यदपि सर्व्वं पितृकृत्यं दैवेनैव तीर्थेन कुर्य्यात् । अपसव्यकरणनिषेधात् उपवीतिनैव सर्वं करणीयमिति पर्य्यव-स्यति । तथा च ब्रह्मपुराणम्—

ज्येष्ठोत्तरकरान् युग्मान् कराग्राऽग्रपवित्रकान्।
कृत्वाऽर्घ्यं सम्प्रदातव्यं नैकैकस्यात्र दीयते॥ ९॥

परिशिष्टप्रकाशः।

वत् हृद्धिश्राद्धं कर्त्तव्यं नैकोद्दिष्टवत् स्वयं कर्त्तव्यतानियम इत्येतदर्थः। तथाऽत्र न वामोपचारः किन्तु दक्षिणोपचारः। यथा शातातपः—

"पूर्व्वाह्णे दैविकं कार्य्यं श्राद्धमभ्युदयार्थकम्।
सव्येन चोपवीतेन ऋजुदर्भैश्च धीमता"॥

सव्येन दक्षिणोपचारेण। अतएव कात्यायनः। "अथाभ्युदयिकं प्रदक्षिणमुपचारः"। गोभिलश्चाह—"अथाभ्युदयिके श्राद्धे युग्मानाशयेत्। प्रदक्षिणमुपचारः" इति॥ ८॥

अर्घदाने पार्व्वणात् विशेषमाह—

युग्मान् पितृब्राह्मणान् ज्येष्ठोत्तरकरान् ज्येष्ठस्य प्रथमोपवेशितस्य

प्रभा।

"तिलार्थं तत्र विकिरेत् प्रशस्तांश्च तथा यवान्।
सर्व्वं यज्ञोपवीती तु न कुर्य्यादपसव्यकम्"॥

इति। उक्तञ्च—

"सदा परिचरेद्भक्त्या पितॄनप्यत्र देववत्"।

इति। अस्मादवगम्यते नात्र वामोपचारः कर्त्तव्यः किन्तु दक्षिणोपचार इति। तथा च श्राद्धकल्पः। "आभ्युदयिके श्राद्धे युग्मानाशयेत् प्रदक्षिणमुपचारः" इति॥ ८॥

अर्घ्यप्रदाने विशेषमाह ज्येष्ठोत्तरकरानिति। ज्येष्ठस्य पंक्ति-

परिशिष्टप्रकाशः।

कर उपरि येषां ते तथा, कराग्रे पवित्राग्रं येषां ते कराग्राऽग्र-पवित्रकाः। तांस्तथाविधान् कृत्वा अर्घ्यपात्रस्थजलपुष्पादि तद्धस्ते दातव्यम्। न तु यथा पार्व्वणे एकस्य पितृब्राह्मणस्य हस्ते, तथा पितामहस्य, तथाऽपरस्य प्रपितामहस्य दीयते तथाऽत्रेति॥ ८॥

---

प्रभा।

श्रेष्ठस्य उत्तरः उपरि स्थितः करो येषां, ज्येष्ठस्य करोपरि करो-येषामिति वा। येषां करोपरि ज्येष्ठस्य कर इत्युभयत्रापि तुल्योऽर्थः। अन्येषां ब्राह्मणां करस्योपरि ज्येष्ठस्य करः स्थापयितव्य इति तात्पर्य्यम्। कराग्राग्रपवित्रकान्, कराग्रे अग्रपवित्रं पवित्राग्रं येषां, तथाविधान् कृत्वाऽर्घ्यं दातव्यम्। अत्राभ्युदयिके एकैकस्य ब्राह्मणस्य हस्ते न दीयते। पार्व्वणे हि "एकैकस्यैकेकेन ददाति" इति श्राद्धकल्पे पित्रादिप्रत्येक-ब्राह्मणहस्तेऽर्घदानमुक्तम्। अत्र तथा न कर्त्तव्यम्। किन्तु पितृ-पितामहप्रपितामहब्राह्मणानां करान् मिलितान् कृत्वा तदुपरि अर्घ्यदानं कर्त्तव्यमित्ययमत्र विशेषः। ज्येष्ठोत्तरकरान् युग्मा-नित्युपक्रमात् नैकैकस्यात्र दीयते इत्युपसंहाराच्च तथा प्रतीतिः। अन्यथा ज्येष्ठोत्तरकरान् युग्मानित्यनेन बहूनां युग्मानां ज्येष्ठोत्तर-करत्वलाभात् नैकैकस्यात्र दीयते इत्यनर्थकं स्यात्। तस्मादय-मेवात्र विशेषः। कराग्राग्रपवित्रकत्वन्तु न विशेष इति पार्व्वणे-ऽप्येतदविशिष्टम्। यद्यपि पार्व्वणे कराग्राग्रपवित्रकत्वं न विहितं, तथाप्येतेन लिङ्गेन तत्र तद्विधिरनुमातव्यः। यथाहुः—

अनन्तगर्भिणं साग्रं कौशं द्विदलमेव च।
प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित् ॥ १० ॥

परिशिष्टप्रकाशः।

पवित्रं व्याकरोति—
कुशस्य पत्रद्वयं अन्तर्गर्भशून्यं साग्रं प्रादेशप्रमाणं सर्वत्र पवित्रं ज्ञेयं, न तु प्रकृते अर्घ्यपात्रमात्रे ॥ १० ॥

प्रभा।

"लिङ्गादपि विधिर्ज्ञेयो दर्भेषु विकिरो यथा"।

ज्येष्ठोत्तरकरत्वन्तु तत्र न शक्यमनुमातुम्। "एकैकस्यैकैकेन ददाति" इत्यनेन विरोधात्। किञ्च पार्वणे दक्षिणाग्रत्वमपि पवित्राणां न विहितं, किन्तु तत्र कुशानां दक्षिणाग्राणां दानदर्शनात् पवित्राणामपि तथा दानं कल्पनीयमिति भवतां सिद्धान्तः। एवञ्चान्तरङ्गत्वादाभ्युदयिके दृष्टं कराग्राग्रपवित्रकत्वमेव कल्प्यताम्। विकृतौ दर्शनादपि सत्यामाकाङ्क्षायां प्रकृतौ कल्पनाया दृष्टत्वात्। विकृतौ सत्रे षोड़शर्त्विजां गोशतदक्षिणायाविभागस्याभिधानात् प्रकृतौ ज्योतिष्टोमे अनुक्तोऽपि षोड़शर्त्विजां द्वादशशतगोदक्षिणाविभागो यथा कल्प्यते, तथैवात्रापि कल्पयितुमुचितमित्यस्तु किं विस्तरेण ॥ ९ ॥

कराग्राग्रपवित्रकानित्युक्तम्। तत्र किं नाम पवित्रमित्यपेक्षायामाह अनन्तर्गर्भिणमिति। अनन्तर्गर्भिणमिति मत्वर्थीयइनप्रत्ययः। अन्तर्वर्त्तिकुशान्तररहितमग्रसहितं प्रादेशपरिमाणं

एतदेव हि पिञ्जूल्यालक्षणं समुदाहृतम् ।
आज्यस्योत्पवनार्थं यत्तदप्येतावदेव तु ॥ ११ ॥

परिशिष्टप्रकाशः ।

अथ सीमन्तमूर्द्धमुन्नयति भूरिति दर्भपिञ्जूलीभिरेव प्रथममित्यत्र, अन्यत्र च चूड़ाकरणे, एकविंशतिर्दर्भपिञ्जूल्य इति सूत्रोक्तदर्भपिञ्जूल्या अपि एतदेव लक्षणमाचार्य्येणोक्तम्। तत एव वर्हिषः प्रादेशमात्रे पवित्रे कुरुते इति सूत्रोक्तमाज्योत्पवनार्थं यत्पवित्रं, तदप्येतावत्संख्यमेव। न तु द्विवचननिर्द्देशात् द्विदलद्वयरूपम्। द्विवचनं तु कुशजातिवचनस्य पवित्रशब्दस्य दलद्वये प्रयोगात् ॥११॥

प्रभा ।

कुशदलद्वयं सर्व्वत्र पवित्रं विज्ञेयम्। यत्र कुत्रचिदित्यनेन व्याप्त्यवगतिः यत्र यत्र पवित्रशब्दः प्रयुज्यते, तत्र तत्रायमर्थो बोद्धव्य-इत्युक्तं भवति ॥ १० ॥

एतदेव हीति। पिञ्जूल्या अपि एतदेव लक्षणं मुनिभिरुदाहृतम्। पवित्रपिञ्जूल्योरेकार्थतेत्यर्थः। एतेन, अथ सीमन्तमूर्द्धमुन्नयति भूरिति दर्भपिञ्जूलीभिरेव प्रथममित्यादि सीमन्तकरणप्रकरणीयगोभिलसूत्रे, तथा चूड़ाकरणे, एकविंशतिर्दर्भपिञ्जूल्य-इति सूत्रे च यः पिञ्जूलीशब्दः प्रयुक्तस्तस्यार्थः स्पष्टीकृतः। आज्यस्योत्पवनार्थं यत् पवित्रं, तदप्येतत्परिमाणमेव नातोऽधिकम्। एतेन, ततएव वर्हिषः प्रादेशमात्रे पवित्रे कुरुते इति गोभिलसूत्रे पवित्रे इति द्विवचननिर्द्देशेऽपि न तत्र विशिष्टद्विदलरूपपवित्रस्य द्वित्वं प्रत्येतव्यम्। तथात्रे प्रादेशमात्रे इत्यस्या-

एतत्प्रमाणामेवैके कौशीमेवार्द्रमञ्जरीम्।
शुष्कां वा शीर्णकुसुमां पिञ्जूलीं परिचक्षते ॥१२॥
पित्र्यमन्त्रानुद्रवणे* आत्मालम्भे अवेक्षणे† ।
अधोवायुसमुत्सर्गे प्रहासेऽनृतभाषणे ॥ १३ ॥

---

परिशिष्टप्रकाशः।

एके पूज्याः प्रादेशप्रमाणामेव कुशमयीं आर्द्रमञ्जरीं शुष्कां वा भ्रष्टपुष्पां पिञ्जलीमाहुः। इयञ्च हरितावै सपिञ्जूला इत्यत्र ग्राह्या, अन्यत्र तु पवित्ररूपैवेति ॥ १२ ॥

पित्र्यमन्त्रोच्चारणे, यज्ञादौ विहिते हृदयस्पर्शे, ऽवेक्षणे तस्यैव

---

प्रभा।

नर्थकत्वापत्तेः। सूत्रे तु पवित्रशब्दस्य पवित्रघटकदले लक्षणा इत्युक्तं भवति। तत्र दललक्षणा तु, पवित्रे स्थो वैष्णव्यावित्यादिमन्त्रे तथा दर्शनात्। पवित्रमित्येकवचनन्तु अच्छिद्रेण पवित्रेणेत्यादिमन्त्रे एकवचनप्रयोगादितिभावः। सौत्रः पवित्रशब्दः कुशजातिमात्रवचनो वा ॥ ११ ॥

एतत्प्रमाणामिति। अन्ये आचार्य्याः प्रादेशप्रमाणां कौशीमार्द्रं मञ्जरीं शुष्कां वा च्युतकुसुमां पिञ्जूलीमाहुः। इयञ्च हरिता वै सपिञ्जूला इत्यत्र ग्राह्या इति नारायणोपाध्यायाः ॥ १२ ॥

पित्र्यमन्त्रेति। मार्ज्जारेति च। पित्र्यमन्त्रस्यानुद्रवणे समु-

---

* पित्र्यमन्त्रानुहरणे, इति क पुस्तके पाठः।

† आत्मालम्भेऽधमेक्षणे, इति ख पुस्तके पाठः।

मार्ज्जारमुषिकस्पर्शे आक्रुष्टे क्रोधसम्भवे ।
निमित्तेष्वेषु सर्वेषु कर्म्म कुर्वन्नपः स्पृशेत् ॥१४॥

## द्वितीयः खण्डः ।

---

परिशिष्टप्रकाशः ।

यज्ञादौ विहिते, अधोवायुसमुत्सर्गे नोद्गुद्गारे, महति हासे न तु स्मिते । आक्रुष्टे परुषभाषणे, क्रोधोत्पत्तौ भाषणं विनापि मनसा, एतेषु निमित्तेषु सर्वत्र कर्म्मकरणकाले जलं स्पृशेत् न त्वाचामेत् । अन्यन्निगदव्याख्यातम् । पित्र्यमन्त्रानुद्रवणे इत्युपलक्षणम् । अतएव योगियाज्ञवल्क्यः—

"रौद्रपित्र्यासुरान्मन्त्रांस्तथाचैवाभिचारिकान् ।
व्याहृत्यालभ्य चात्मानं अपः स्पृष्ट्वाऽन्यदाचरेत् ॥१३॥१४॥

द्वितीयः खण्डः ॥ २ ॥

---

प्रभा ।

चारणे । पित्र्यमन्त्रानुद्रवणे इति पाठेऽपि तथैवार्थः । आत्मालम्भे हृदयस्पर्शे । आत्मनोऽमूर्त्तत्वात् स्थानिना स्थानं लक्ष्यते । अधमेक्षणे चण्डालादिदर्शने । अवेक्षणे इति पाठे अवेक्षणं हृदयस्यैव आलम्भोऽवेक्षणञ्च हृदयस्य यज्ञादौ यद्विहितं तस्मिन्निति परिशिष्टप्रकाशः ।

अधोवायुसमुत्सर्गे नोद्गारे । प्रहासे उच्चैर्हास्ये न स्मिते । मार्ज्जारस्य मूषिकस्य च स्पर्शे । आक्रुष्टे इति भावे निष्ठा ।

प्रभा।

परुषभाषणे। क्रोधसम्भवे परुषभाषणं विनापि। एषु निमित्तेषु, सर्व्वेष्विति करणादन्येष्वप्येवंविधेषु निमित्तेषु जातेषु कर्म्म कुर्व्वाणो जलं स्पृशेत् न त्वाचामेत्। यदाह योगियाज्ञवल्क्यः—

"रौद्रपित्र्यासुरान्मन्त्रांस्तथाचैवाभिचारिकान्।
व्याहृत्यालभ्य चात्मानमपः स्पृष्ट्वाऽन्यदाचरेत्" ॥

इति ॥ १३ ॥ १४ ॥

इति द्वितीयः खण्डः।

## तृतीयः खण्डः ।

अक्रिया त्रिविधा प्रोक्ता विद्वद्भिः कर्म्मकारिणाम् ।
अक्रिया च परोक्ता च तृतीया चाऽयथा क्रिया ॥ १ ॥
स्वशाखाश्रयमुत्सृज्य परशाखाश्रयन्तु यः ।
कर्त्तुमिच्छति दुर्मेधा मोघं तत्तस्य चेष्टितम् ॥ २ ॥

परिशिष्टप्रकाशः ।

अकरणं परशाखोक्तकरणं विहितेतरप्रकारेण क्रमान्तरादिना करणं, त्रिविधैव कर्म्मणामक्रिया, निष्फलत्वात् ॥ १ ॥

परोक्तेत्यत्र विशेषमाह—

स्वशाखोक्तश्राद्धादिकमुत्सृज्य पारशाखिकं स्वशाखोक्तविपरीतं यः कर्त्तुमिच्छति शास्त्रीयज्ञानविपरीतज्ञानवान् । तस्य यत्कृतं तन्निष्फलम् ॥ २ ॥

प्रभा ।

कुशासनार्घ्यदानादौ श्राद्धेतिकर्त्तव्यतायां प्रायः सर्व्वैरेवाचार्य्यैरन्योऽन्यश्च प्रकारः उपदिष्टः । स च तदीयैरेव कर्त्तव्यो-न त्वन्यैः । अन्यस्य त्वन्योक्तकरणमक्रियैवेत्याह अक्रियेति । कर्म्मकरणशीलानां कर्म्मस्वधिकुर्व्वाणानां त्रिविधा अक्रिया मुनिभिः कथिता, अकरणं परोक्तकरणमयथाकरणञ्चेति । अयथाकरणञ्च पौर्व्वापर्य्यविपर्य्यासेनानुष्ठानम् ॥ १ ॥

स्वशाखाश्रयमिति । यस्तावत् स्वशाखोक्तस्य प्रयोगस्यान्तरा-

यन्नाम्नातं स्वशाखायां परोक्तमविरोधि यत् *।
विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्म्मवत् ॥ २ ॥

परिशिष्टप्रकाशः।

स्वशाखायां यत् नोक्तं परशाखोक्तं, यथा छन्दोगानां याजुर्वैदिकमग्निहोत्रम्। यद्वा स्वशाखोक्तस्याकाङ्क्षापूरकत्वेन स्वरूपतो वा अविरोधि। यथा मनुनोक्तस्य—

"मेखलामजिनन्दण्डमुपवीतं कमण्डलुम्।
अप्सु प्रास्य विनष्टानि गृह्णीतान्यानि मन्त्रवत्"॥

इत्यस्य मन्त्राकाङ्क्षापूरकं गृह्यान्तरे मन्त्राभिधानं तदर्म्मिभिः कर्त्तव्यमेव। पौराणिकादि तु साधारणत्वान्न पारक्यमिति तदपि

प्रभा।

न्तरा परोक्तमनुतिष्ठति। तस्य तावदसावक्रियेत्युक्तम्। यस्तु पुनर्दुर्बुद्धिः स्वशाखाश्रयं प्रयोगमुत्सृज्य श्रद्धाजाड्यादिना परशाखाश्रयं प्रयोगं चिकीर्षति, तस्य यत् कृतं तन्निष्फलम्। तस्येति शेषिकी षष्ठी। तुशब्देन पूर्व्वस्मादस्य भेदं प्रज्ञापयति ॥ २ ॥

यन्नाम्नातमिति। यत् स्वशाखायां नाम्नातं, तत्परोक्तमपि विद्वद्भिरनुष्ठेयं यदि स्वशाखया न विरुध्यते। तत्र दृष्टान्तः अग्निहोत्रादिकर्म्मवदिति। अग्निहोत्रं किल छन्दोगशाखायां नाम्नायते, किन्तु छन्दोगैरप्यध्वर्य्युशाखापरिपठितं तदनुष्ठीयते।

अत्र किञ्चिद्वक्तव्यमस्ति। प्रथमश्लोके तावत् परोक्तकरण-

---

* पारक्यमविरोधि यत् इति, परोक्तमविरोधि च, इति च पाठौ।

परिशिष्टप्रकाशः।

स्वशाखोक्तादधिकमनुष्ठेयमेव। यथा देवताभ्य इति मन्त्रजपादि।

यत्तु गृह्यपरिशिष्टोक्तम्।

"बह्वल्पं वा स्वगृह्योक्तं यस्य कर्म्म प्रकीर्त्तितम्।

तस्य तावति शास्त्रार्थे कृते सर्व्वः कृतोभवेत्"॥

तत्साधारणानां परोक्तानाञ्च नावश्यमनुष्ठानमित्येवंपरम्। न तु स्वगृह्योक्तमात्रमेवानुष्ठेयमिति तस्यार्थः। गृह्यानुक्तानां साधारणानां उपदेशानर्थक्यापत्तेः। शाखान्तराधिकरणविरोधाच्च॥ ३॥

---

प्रभा।

मक्रियेत्युक्तम्। द्वितीयश्लोकेन स्वशास्त्रोक्तं प्रयोगमुपेक्ष्य परशास्त्रोक्तप्रयोगस्यानुष्ठानं निषिद्धम्। तृतीयेन तु यत् स्वशाखायां नोच्यते, अविरुद्धं तत् परोक्तमप्यनुष्ठेयमित्युपदिष्टम्। तत्र स्वशाखाश्रयमित्यनेन स्वशास्त्रोक्तप्रयोगपरित्यागेन परशास्त्रोक्तप्रयोगानुष्ठानस्य निन्दितत्वात् परोक्ता चेत्यनेन स्वशास्त्रोक्तप्रयोगानुष्ठानकाले परोक्तस्यानुष्ठानमक्रियेत्युच्यते। एवञ्च स्वशास्त्रोक्तस्य प्रयोगस्यान्तराऽन्तरा परोक्तानुष्ठानं न कर्त्तव्यमिति तस्यार्थः। अन्यथाऽनर्थकत्वापत्तेः। तच्चेदं स्वशास्त्रोक्तप्रयोगस्यान्तराऽन्तरा परशास्त्रोक्तस्यानुष्ठानं श्रौतेषु न शक्यते निषेद्धुम्। होत्रादितत्तच्छाखासु तेषां तेषामिकैकेषामेव कर्म्मोपदेशात्। होतृद्गात्रध्वर्य्युप्रभृतिभिश्च विभिन्नशाखिभिः ऋत्विग्भिर्यज्ञनिष्पत्तेः। तथाच होता वषट् करोति अध्वर्य्युर्जुहोति उद्गाता चोद्गायतीत्यादिकं तत्र तत्र विहितम्। तस्मात् परिशेषात् स्वगृह्योक्तप्रयोगस्या-

प्रभा।

न्तराऽन्तरा परोक्तस्यानुष्ठानमक्रियोक्तमिति वक्तव्यम्। तथाच श्राद्धभाष्ये नीलाम्बरधृतं गृह्यपरिशिष्टम्—

"प्रयोगशास्त्रं गृह्यादि न समुच्चीयते परैः।
प्रयोगशास्त्रताहानिरनारम्भविधानतः॥
बह्वल्पं वा स्वगृह्योक्तं यस्य कर्म्म प्रकीर्त्तितम्।
तस्य तावति शास्त्रार्थे कृते सर्व्वः कृतो भवेत्॥
श्रौतेषु सर्व्वशाखोक्तं सर्व्वस्यैव यथोचितम्।
स्मार्त्तं साधारणं तेषु ग्राह्यं श्रौतेषु कर्म्मसु"॥

इति। तथा गृह्यासंग्रहः—

"आत्मतन्त्रेषु यन्नोक्तं तत् कुर्य्यात् पारतन्त्रिकम्।
विशेषाः खलु सामान्या ये चोक्ता वेदवादिभिः॥
ऊनो वाऽतिरिक्तो वा यः स्वशाखोक्तमाचरेत्।
तेन सन्तनुयात् यन्नं न कुर्य्यात् पारतन्त्रिकम्॥
यः स्वशाखोक्तमुत्सृज्य परशाखोक्तमाचरेत्।
अप्रमाणमृषिं कृत्वा सोऽन्धे तमसि मज्जति"॥

इति। तदिदं तत्रभवतो गोभिलपुत्रस्य वचनत्रयं कात्यायनसमानार्थम्। तत्र प्रथमवचनं यन्नाम्नातमित्यनेन, द्वितीयवचनं परोक्ता चेत्यनेन, तृतीयवचनं स्वशाखाश्रयमुत्सृज्येत्यनेन समानार्थम्। अपि चाहुः—

"प्रयोगः सूत्रकारोक्तो न समुच्चयमर्हति।
समुच्चये यतस्तस्य न निष्पत्तिर्न च क्रमः"॥

प्रभा।

इति। न च परोक्तगुणानुपसंहारे शाखान्तराधिकरणन्यायविरोध इति वाच्यम्। तन्न्यायस्य श्रौतविषयत्वात्। वाचनिकेऽर्थे न्यायानवताराच्च। किञ्च नाम्नोऽभेदेऽपि यथासम्भवं रूपभेदादिभ्यः तस्य तस्य कर्म्मान्तरत्वमेवेति कुत्र कस्य गुणोपसंहारः। न हि कर्म्मान्तरे कर्म्मान्तरगुणानामुपसंहारः शास्त्रानुमतः। अतएव—

"नैकस्मिन् कर्म्मणि तते कर्म्मान्यत्तायते यतः"।

इत्यनेन वैश्वदेववलिकर्म्मणोः सामान्ययोः विशेषोक्ताभ्यां ताभ्यां कर्म्मान्तरत्वं स्वयमेव वक्ष्यति। यच्च पुराणोक्तं साधारणं, तत् यद्यपि न पारक्यं, तथापि स्वशास्त्रोक्तप्रयोगे न तस्य गुणोपसंहारः। तस्य कर्म्मान्तरत्वात् कर्म्मान्तरे च कर्म्मान्तरगुणानामुपसंहारायोगात्। पूर्व्वोक्तगृह्यपरिशिष्टे अनारभ्यविधानादन्यैर्गृह्यादेः समुच्चयनिषेधाच्च। किन्तु स्वशास्त्रोक्तप्रयोगानुष्ठानानन्तरं फलभूयस्त्वार्थमिच्छया तस्याप्यनुष्ठानं भवेदित्यपि वैश्वदेववलिकर्म्मणोः स्वयमेव वक्ष्यति। अनारभ्यविधानैः समुच्चयेऽप्येषैव गतिः। तेषामनुष्ठाने फलभूयस्त्वमननुष्ठानेऽपि गृह्योक्तमात्रस्यानुष्ठानात् फलसिद्धिः। तथाचोक्तं, बह्वल्पं वा स्वगृह्योक्तमित्यादि। मदनपारिजातेऽप्युक्तम्। असमर्थश्चेत् स्वगृह्योक्तमात्रमेव करोति तावतैव तस्य शास्त्रार्थसिद्धेरुक्तत्वात्, इति। तस्मात् श्रौतेषु पारशाखिकं कर्त्तव्यं, गृह्योक्तेषु तन्न कर्त्तव्यम्। अनारभ्य विहितन्तु गृह्योक्तेऽपि प्रयोगे कर्त्तव्यं, परमेषामकरणेऽपि

प्रवृत्तमन्यथा कुर्य्याद्यदि मोहात्कथञ्चन।
यतस्तदन्यथाभूतं ततएव समापयेत् ॥ ४ ॥

परिशिष्टप्रकाशः।

दैवादन्यथा क्रियायां यत्कर्त्तव्यं, तदाह—
प्रवृत्तं प्रारब्धं यत्कर्म्म, करणे सत्येवान्यथा क्रमान्यत्वेन कुर्य्यात्। तत्र यस्मात्पदार्थादारभ्य यत्कर्म्मान्यथाजातं ततएवारभ्य पुनर्य्यथोक्त-प्रकारेण कुर्य्यात्। यथा गन्धोत्सर्गगन्धदानयोः क्रमान्यत्वेनानुष्ठाने-ऽन्यथा करणकाले ज्ञातयोस्तत आरभ्य पुनरनुष्ठानम् ॥ ४ ॥

प्रभा।

गृह्योक्तमात्रकरणात् फलसिद्धिः, अनारभ्यविहितानां करणे तु फलातिशयः। सामान्यस्तु प्रयोगः स्वशाखोक्तप्रयोगात् परत-इच्छया कर्त्तव्यः। तत्रापि फलभूमा बोद्धव्यः ॥ ३ ॥

प्रारब्धस्य कर्म्मणो दैवादन्यथाकरणे यत् कर्त्तव्यं, तदभिधीयते प्रवृत्तमिति। प्रारब्धं कर्म्म मोहात् कथञ्चन यद्यन्यथा कुर्य्यात्, तदा, समाप्ते यदि जानीयादिति परतः करणादसमाप्ते कर्म्मणि प्रयोगमध्ये तस्यान्यथा करणस्य ज्ञाने यस्मात् पदार्थादारभ्य तत् कर्म्मान्यथा भूतं, तस्मादेव पदार्थादारभ्य तत् कर्म्म समापयेत् न तूपक्रमादारभ्य। अन्यथाकरणमत्राकरणं पौर्व्वापर्य्यविपर्य्ययेण करणञ्च। यथा श्राद्धे कुशासनदानादीनां कस्यचिदकरणे क्रमविपर्य्यासेन वा करणे प्रधाननिष्पत्तेः पूर्व्वं ज्ञाते यस्मात् पदार्थादारभ्यान्यथा करणं वृत्तं, तस्मात् पदार्थादारभ्य

प्रभा ।

पुनस्तत् करणीयम् । यथा वा षोड़शश्राद्धानां कस्याप्यकरणे सपिण्डीकरणात् पूर्व्वं तज्ज्ञाने यत् श्राद्धं न कृतं तस्मादारभ्य पुनः करणीयम् । मासस्साध्यदर्शपौर्णमासवत् सहस्रसंवत्सरसत्रादिवच्च संवत्सरसाध्यं षोड़शश्राद्धमप्येकं कर्म्म । तच्चैतदाद्यश्राद्धेनोपक्रम्यते सपिण्डीकरणेन च समाप्यते । दर्शपौर्णमासादिवदेवानेकदिनसम्पाद्यः प्रयोगोऽपि तस्यैक एव ।

यच्च तत्त्वकृद्भिरुक्तं, क्रमरूपाङ्गानुरोधेन प्रधानीभूतश्राद्धान्तराणामावृत्तेरयुक्तत्वात् यत् पतितं तदेव कर्त्तव्यमिति । तच्चिन्त्यम् । अनन्यगतेर्वचनात् । वाचनिके चार्थे न्यायानवतारात् । तथाचोक्तम् । किमिव हि वचनं न कुर्य्यात् नास्ति वचनस्यातिभार इति । यच्चापरमुक्तम् । प्रवृत्तमन्यथा कुर्य्यादिति वचनं प्रयोगमध्य एव सुकरत्वेन बोध्यमिति । तदपि प्रमाणविशेषाभावात् सुकरत्वस्य चाकिञ्चित्करत्वात् कल्पनामात्रम् । न च तावताऽपि निस्तारः । षोड़शश्राद्धानामेककर्म्मत्वात् संवत्सरसम्पाद्यस्य तत्प्रयोगस्याप्येकत्वात् । फलजनकापूर्व्वैक्यात् कर्म्मणोऽप्यैक्यमिति । तुल्यकक्षाणां षोड़शश्राद्धानामेकतमासिद्धौ प्रधानापूर्व्वासिद्धिर्दर्शापूर्व्ववदिति च तैरेवोक्तम् । शरत्काले महापूजेत्येकवचन श्रुतेरेकप्रयोगसाध्यत्वेनैककर्म्मतापन्नक्रियाकलापजन्यस्य वाक्यार्थीभूतनियोगस्यैक्यादृशंवत्र प्रत्येकं तत्तत्कर्म्मणां सङ्कल्पः कलिकापूर्व्वजनकत्वादैन्द्रदध्यादियागवदिति चोक्तं दुर्गोत्सवप्रकरणे । तस्मात् तन्मतेऽपि षोड़शश्राद्धमेकमेव कर्म्म प्रयोगश्च

असमाप्ते यदि जानीयान्मयैतदयथाकृतम्।
तावदेव पुनः कुर्य्यान्नावृत्तिः सर्वकर्म्मणः॥ ५॥

परिशिष्टप्रकाशः।

अन्यथा कृतयोस्तु प्रयोगमध्येऽज्ञाने यत्कर्त्तव्यं तदाह—समाप्ते अन्यथा कृतेऽन्यथाकरणज्ञाने सति यत्पदार्थान्यथाकरणं जातं तमेव यथोक्तक्रमेण पुनः कुर्य्यात्। न तत आरभ्य सर्वं कर्म्मकाण्डम्। एतच्च पुनरनुष्ठानसविलम्बे सुकरत्वे च कर्त्तव्यम्*। यत्र तु विलम्बोदुःकरत्वं च तत्र विष्णुस्मरणमेव न त्वावृत्तिः। यथाऽकृतोत्सर्गस्यान्नस्य ब्राह्मणैर्भोजने पुनरन्नान्तरोत्पादनोत्सर्गे। अन्यथा ब्राह्मणोपरोधसहत्वबाधापत्तेरिति॥ ५॥

प्रभा।

तस्यैक इति सपिण्डीकरणात् पूर्व्वं कस्याप्यकरणस्मरणे तदादिश्राद्धानां पुनः करणं न शक्यते वारयितुमित्यास्तां विस्तरः॥ ४॥

समाप्ते इति। कर्म्मणः समाप्त्यनन्तरमन्यथा करणज्ञाने यदन्यथा कृतं तावन्मात्रमेव करणीयं, न तु तदारभ्य सर्व्वं कर्म्मावर्त्तनीयम्। असमाप्ते कर्म्मण्यन्यथा करणस्मरणे तु कृतस्याप्यावृत्तिरनेनाऽपि दर्शिता। अन्यथा करणञ्चाताकरणमेव न तु क्रमविपर्य्यासेन करणमपि। प्रधानस्य निष्पन्नत्वे क्रमविपर्य्यास-

* द्रष्टव्यम्,—इति क ग पुस्तकयोः पाठः।

प्रधानस्याक्रिया यत्र साङ्गं तत्क्रियते पुनः ।
तदङ्गस्याक्रियायान्तु नावृत्तिर्न च तत्क्रिया ॥६॥

---

परिशिष्टप्रकाशः ।

इदानीं दैवादक्रियायां यत्कर्त्तव्यं तदाह—
प्रधानस्य कर्म्मणो गन्धादिदानादेर्य्यत्राकरणं उत्सर्गश्च तदङ्गभूतः कृतस्तत्र पुनरङ्गानुष्ठानसहितं तत्कर्म्म कर्त्तव्यम् । अङ्गमात्रस्य तूत्सर्गस्याकरणे प्रधानस्य कृतस्य नावृत्तिर्नाप्यङ्गानुष्ठानम् । किन्तु तत्समाधानार्थम्—

"अज्ञानात् यदि वा मोहात्प्रच्यवेताध्वरेषु यत् ।
स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः" ॥

इति योगियाज्ञवल्क्योक्तमनुष्ठेयम् । एवं समाप्ते प्रयोगे अन्यथा-

---

प्रभा ।

स्याकिञ्चित्करत्वात् । पुनः कुर्य्यादिति पुनःशब्दो दशाहान्ते पुनः क्रियेत्यादिवत् लेखशैली ।

"या नार्य्यकृतसीमन्ता प्रसूयेत कदाचन ।
अङ्के निधाय तं बालं पुनः संस्कारमर्हति" ॥

इत्यादिवत् प्रतिप्रसवावद्योतको वा ॥ ५ ॥

तावन्मात्रकरणेऽपि विशेषमाह प्रधानस्येति । यत्राङ्गमात्रं कृतं प्रधानन्तु न कृतं तत्राङ्गसहितं प्रधानं पुनः करणीयम् । यत्र तु प्रधानमात्रं कृतं न त्वङ्गं, तत्राङ्गानुरोधेन साङ्गस्य प्रधानस्य नावृत्तिर्न वा तावन्मात्रस्याङ्गस्य करणम् । एतद्वचनार्थं-

मधुमध्विति यस्तत्र त्रिर्जपोऽशितुमिच्छताम्।
गायत्र्यनन्तरं सोऽत्र मधुमन्त्रविवर्ज्जितः॥ ७॥

परिशिष्टप्रकाशः।

करणस्थानेऽप्येतदेव समाधानमिति। अन्येतु तदङ्गस्य साङ्गप्रधान-प्रयोगाङ्गस्य उपवीतित्वादेरकरणे न साङ्गप्रधानस्य कृतस्यावृत्तिः नाप्युपवीतित्वादेः करणं, किन्तु विष्णुस्मरणमेव प्रायश्चित्त-मित्याहुः॥ ६॥

वसिष्ठोक्तादपरान् बहून् विशेषानाह—

वसिष्ठोक्तपार्व्वणे भोक्तुमिच्छतां श्राव्यत्वेन सम्बन्धि गायत्र्याः पश्चाद्भवोयो मधुमध्वितिन्त्रिर्जपो मधुवातेति मन्त्रसहितः, सोऽत्र तन्मन्त्रं विना पठनीयः। एवञ्च भोजनकाले मन्त्रः पठनीय एव पूर्व्वकाले निषेधात्॥ ७॥

प्रभा।

पर्य्यालोचनया पूर्व्ववचने अन्यथाकरणमकरणपर्य्यवसितमित्यव-गम्यते। किन्तु तत्र कर्म्मणः सम्पूर्णत्वार्थं विष्णुस्मरणं कर्त्तव्यम्।

"अज्ञानाद् यदि वा मोहात् प्रच्यवेताध्वरेषु यत्।
स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिः"॥

इति योगियाज्ञवल्क्योक्तेः॥ ६॥

प्रासङ्गिकमभिधाय वशिष्ठोक्तपार्व्वणादाभ्युदयिके विशेषाने-वाह मधुमध्वितीति। अशितुमिच्छतामिति संबन्धलक्षणा षष्ठी। तत्र वशिष्ठोक्तपार्व्वणे भोक्तुमिच्छतां ब्राह्मणानां श्राव्यतया

न चाश्नत्सु जपेदत्र कदाचित्पितृसंहिताम् ।
अन्य एव जपः कार्य्यः सोमसामादिकः शुभः ॥ ८ ॥

---

परिशिष्टप्रकाशः ।

भुञ्जानेषु, यद्वा उ विश्पतिः इत्यादिपितृसंहिताजपो यस्तत्र विहितः, सोऽत्र न कर्त्तव्यः । किन्तु तत्स्थानेऽन्य एव सोमसामादिजपोमङ्गल्यः कार्य्य इति । तथाच कात्यायनः—पित्र्यमन्त्रवर्ज्जं जप इति ॥ ८ ॥

---

प्रभा ।

गायत्र्यानन्तरं मधुवातेति ऋक्त्रयजपानन्तरं मध्विति त्रिर्जपो यो विहितः, सोऽत्र मधुमन्त्रविवर्जितः कार्य्यः । मधुमध्वित्यत्र प्रथमं मधुपदं मधुद्रव्यपरम् । तथाच मधुद्रव्यप्रकाशकस्य मधुशब्दस्य तत्र यस्त्रिर्जप इति वदन्ति । वस्तुतस्तु प्रथमं मधुपदं मधुवातेत्यादिऋक्त्रयपरम् । "तृचसूक्तानामादिग्रहणेन विधिरनादेशे" इति सूत्रकारवचनात् । द्वितीयं मधुपदञ्च स्वरूपपरम् । श्राद्धकल्पे मधु च त्रिर्जपेत इत्येकस्यैव मधुशब्दस्य त्रिर्जपाभिधानात् । तथाच मधुवातेति ऋक्त्रयजप इदानीं न कर्त्तव्यः । अशितुमिच्छतामिति करणात् भोजनपूर्व्वकाल एव मधुमन्त्रजपोनिषिध्यते । भोजनकालादौ तु स कर्त्तव्य एव ॥ ७ ॥

न चाश्नत्स्विति । भुञ्जानेषु ब्राह्मणेषु पितृसंहिताजपे-

यस्त्वत्र प्रकारोऽन्नस्य तिलवद्यववत्तथा ।
उच्छिष्टसन्निधौ सोऽत्र तृप्तेषु विपरीतकः ॥ ९ ॥

---

परिशिष्टप्रकाशः ।

पार्वणे उच्छिष्टसन्निधौ तृप्त्यनन्तरं यदन्नविकरणं तिलयुक्तं, तदत्र विपरीतं तृप्तेः पूर्व्वमित्यर्थः । तथा, स प्रकरोऽत्र यववद्यवयुक्तं यथा स्यात् तथा कार्य्यः ॥ ९ ॥

---

प्रभा ।

यस्तत्र विहितः, सोऽत्र कदाचिदपि न कर्त्तव्यः । किन्तु तस्मादन्य एव मङ्गल्यः सोमसामादिजपः कर्त्तव्यः । पितृसंहिता च "यदा उ विश्पतिः सनादग्नेऽचचमो मदन्तद्यभिस्त्रिपृष्ठमक्रान्‌-समुद्रः कनिक्रन्तीति द्वे एषा पितृश्च नाम संहिता" इति सामविधानब्राह्मणोक्ता बोद्धव्या । सोमसामानि च च्छन्दस्यार्चिके समाम्नातासु तथा पवस्व धारया इत्यादिकासु बह्वीषु ऋक्षु गीयमानानि बहून्येव गेयगाने पठितानि ॥ ८ ॥

यस्त्वत्रेति । पार्व्वणे तृप्तेषु ब्राह्मणेषु उच्छिष्टसन्निधौ तिलवत् यथा भवति तथा योऽन्नप्रकरो विहितः, सोऽत्र विपरीतकः यववद्यथा भवति तथा कर्त्तव्यः । वैपरीत्यञ्चात्र देवतीर्थप्रागग्र-कुशादियोगात् अतृप्तेषु ब्राह्मणेषु करणाद्वा । अन्नप्रकरोऽन्न-विकिरणमग्निदग्धापिण्डदानमिति यदुच्यते ॥ ९ ॥

सम्पन्नमितितृप्ताःस्थप्रश्नस्थाने विधीयते ।
सुसम्पन्नमितिप्रोक्ते शेषमन्नन्निवेदयेत् ॥ १० ॥

परिशिष्टप्रकाशः ।

पार्व्वणे तृप्ताःस्थेति यः प्रश्नः, तत्स्थाने सम्पन्नमिति वक्तव्यम् । प्रश्नानन्तरं सुसम्पन्नमिति ब्राह्मणैः प्रोक्ते शेषमन्नमप्यस्तीति ब्राह्मणेभ्यो निवेदयेत् । तथाच कात्यायनः—सम्पन्नमिति तृप्तिप्रश्नः ॥ १० ॥

प्रभा ।

सम्पन्नमितीति । पार्व्वणे तृप्ताः स्थ इति योऽयं प्रश्नस्तस्य स्थाने अत्र सम्पन्नमिति प्रश्नो विधीयते क्रियते । कर्त्तव्य इति यावत् । ब्राह्मणैः सुसम्पन्नमित्युत्तरे कथिते शेषमन्नं तान् ज्ञापयेत् । कथं ज्ञापयेत् ? उच्यते । अन्नशेषैः किं क्रियतामिति प्रष्टव्यम् । तैश्च इष्टैः सहोपभुज्यतामिति वक्तव्यम् । तथाच च्छन्दोगापरसूत्रम् । "शेषमन्नमनुज्ञाप्यान्नशेषैः किं क्रियतामिष्टैः सहोपभुज्यतामिति" इति । इति अनेन प्रकारेणानुज्ञाप्येत्यर्थः । यत्तु शेषमन्नं क्व देयमिति पृच्छेत् । इष्टेभ्यो दीयतामिति प्रतिवचनम् ।

"स तानाह पुनः शेषं क्व देयन्नान्नमित्यपि ।
इष्टेभ्यो दीयतामेतदिति संप्रवदन्ति ते" ॥

इति ब्रह्मपुराणादिति तत्त्वकृद्भिरुक्तम् । तदयुक्तम् । ब्रह्मपुराणवचनस्यादिवराहकृतश्राद्धप्रयोगविषयत्वात् । छन्दोगानां स्व-

प्रागग्रेष्वथ दर्भेषु आद्यमामन्त्र पूर्व्ववत्।
अपः क्षिपेन्मूलदेशेऽवनेनिक्ष्वेति निस्तिलाः ॥११॥

## परिशिष्टप्रकाशः।

आद्यं पितरं अर्घप्रदान इव सम्बोधनान्तनामगोत्राभ्यां निर्दिश्य पूर्व्वाग्रेषु स्तरणकुशेषु मूलदेशे अवनेनिक्ष्वेति तिलरहिता अपः क्षिपेत्। अत्र च प्रागग्रता निस्तिलता च वसिष्ठोक्ताद्विशेषः ॥११॥

## प्रभा।

शाखाभेदेऽन्यथोपदेशाच्च। न हि तत्परित्यागेनादिवराहकृत-श्राद्धप्रयोगविषयं ब्रह्मपुराणवाक्यमादर्त्तुमुचितम्। शेषभोजन-ञ्चैवं यजमानस्य न स्यात्, ब्रह्मपुराणे शेषस्येष्टेभ्यो दानोक्तेः। तथाच स्मृत्यादिविरोधः। शेषमन्नमस्तीति ब्राह्मणेभ्यो निवेदयेदिति नारायणोपाध्यायव्याख्यानमपि प्रमाणशून्यम् ॥ १० ॥

पितरो गृह्याश्रेष्टाः। तत्र पिण्डदानेन पितृणामुपभोगो-भवतीति पिण्डदानं वक्तुमुपक्रमते प्रागग्रेष्विति। अथशब्दो-विशिष्टानन्तर्य्यज्ञापनार्थः। ब्राह्मणप्रत्युत्तरपिण्डपितृयज्ञातिदेश-प्राप्तरेखाकरणाद्यनन्तरमित्यर्थः। आद्यं पितरं अर्घप्रदानोक्तवत् संबोधनान्तगोत्रादिभिरामन्त्र अवनेनिक्ष्वेत्युक्त्वा पिण्डप्रदानार्थ-मास्तृतेषु पूर्व्वाग्रेषु कुशेषु मूलदेशे तिलरहितमुदकं क्षिपेत्। निस्तिला इत्युक्तेः अपां सयवत्वमवगम्यते। यवैस्तिलार्थं इति वचनात् ॥ ११ ॥

द्वितीयञ्च तृतीयञ्च मध्यदेशाग्रदेशयोः।
मातामहप्रभृतींस्तु एतेषामेव वामतः॥ १२ ॥
सर्वस्मादन्नमुद्धृत्य व्यञ्जनैरुपसिच्य च।
संयोज्य यवकर्कन्धूदधिभिः प्राङ्मुखस्ततः॥१३॥

परिशिष्टप्रकाशः।

द्वितीयं पितामहम्। तृतीयं प्रपितामहम्। आद्यवदामन्त्र्य स्तरणकुशानां मध्याग्रयोर्मूलवदपो विनिक्षिपेत्। एतेषामेव त्रयाणां वामतोदक्षिणस्यां दिशि, यथा दक्षिणोपचारोभवति तथा, आस्तीर्णकुशेषु प्रागग्रेषु मातामहादीनां मूलमध्याग्रदेशेषु पूर्व्ववदपो विनिक्षिपेत्॥ १२ ॥

तदनन्तरञ्च—

सर्वस्मात्प्रकृतादन्नादन्नं गृहीत्वा व्यञ्जनैर्म्मिश्रयित्वा यववदरदधिभिः

प्रभा।

द्वितीयञ्चेति। द्वितीयं पितामहं तृतीयं प्रपितामहं पूर्व्ववदामन्त्र्य अवनेनिक्ष्वेत्युच्चार्य्य यथाक्रमं आस्तृतकुशानां मध्यदेशे अग्रदेशे च निस्तिला अपः क्षिपेदित्यनुषज्यते। एतेषामेव पित्रादीनां त्रयाणां वामतो दक्षिणस्यां दिशीत्यर्थः। पिण्डप्रदानार्थमावाहितानां पित्रादीनां प्रत्यङ्मुखत्वस्यौचित्यात्। एवञ्च सति प्रदक्षिणमुपचारः सम्पद्यते। मातामहप्रभृतीन् मातामहप्रमातामहवृद्धप्रमातामहान् पूर्व्ववदामन्त्र्येत्यादि पूर्व्वोक्तमनुवर्त्तते॥१२॥

पिण्डदानप्रकारमाह सर्व्वस्मादिति द्वाभ्याम्। सर्व्वस्मात्

अवनेजनवत्पिण्डान् दत्वा विल्वप्रमाणकान् ।
तत्पात्रक्षालनेनाथ पुनरप्यवनेजयेत् ॥ १४ ॥

## तृतीयः खण्डः ।

---

परिशिष्टप्रकाशः ।

संयोज्य प्राङ्मुखो विल्वमात्रान् षट् पिण्डान् कृत्वाऽवनेजनवद्दत्वा पिण्डपात्रप्रक्षालनजलेन पुनरवनेजयेत् । अत्र स्वोक्तप्राङ्मुखत्वेनाश्वलायनोक्तम् आभ्युदयिके युग्मा ब्राह्मणाः समूलाः दर्भाः प्राङ्मुखेभ्यः उदङ्मुखोदद्यादिति उदङ्मुखत्वं बाध्यम् ॥ १३ ॥ १४ ॥

इति तृतीयः खण्डः ।

---

प्रभा ।

श्राद्धार्थादन्नादित्यर्थः । शेषमन्नं निवेदयेदित्यनेन तथैवावगतेः । सर्व्वत्वमाधिकारिकमिति सिद्धान्तात् ।

"सर्व्वस्मात् प्रकृतादन्नात् पिण्डान् मधुतिलान्वितान्" ।

इति पार्व्वणे दर्शनाच्च । प्रकृतादन्नादन्नमुद्धृत्य पात्रान्तरे कृत्वा व्यञ्जनैरुपसिच्य मिश्रयित्वा यवकर्कन्धूदधिभिः संयोज्य प्राङ्मुखो-विल्वपरिमितान् पिण्डान् अवनेजनवत् दत्त्वा पिण्डपात्रप्रक्षालन-जलेन पुनरवनेजयेत् । कर्कन्धूर्वदरम् । प्रसिद्धमन्यत् । अवने-जनवदित्यनेन मूलमध्याग्रदेशेषु पिण्डदानमुक्तम् । अवनेजये-दित्युक्तेरत्राप्यवनेनिक्ष्वेतिप्रयोगः ॥ १३ ॥ १४ ॥

इति तृतीयः खण्डः ।

## चतुर्थः खण्डः ।

उत्तरोत्तरदानेन पिण्डानामुत्तरोत्तरः ।
भवेदधश्चाचरणादधोऽधः श्राद्धकर्म्मणि ॥ १ ॥
तस्माच्छ्राद्धेषु सर्व्वेषु वृद्धिमत्स्वितरेषु च ।
मूलमध्याग्रदेशेषु ईषत्सक्तांश्च निर्वपेत् ॥ २ ॥

---

### परिशिष्टप्रकाशः ।

मूलादिक्रमेण पिण्डदानं स्तौति—

पिण्डानां मूलादिक्रमेण उपर्य्युपरि दानेन दाता उपर्य्युपरि भवति ऊर्द्ध्वगतिभागी भवतीति स्तुतिः । विपरीतदानेन त्वधोगतिः श्राद्धकर्म्मसु भवति ॥ १ ॥

तस्माद्वृद्धिश्राद्धेष्वन्येषु च पार्व्वणादिषु मूलादिक्रमेण ईषत्सक्तांश्च पिण्डान्निर्व्वपेदिति ॥ २ ॥

---

### प्रभा ।

मूलादिक्रमेण पिण्डदानस्य फलवादमन्वयव्यतिरेकाभ्यामाह उत्तरोत्तरेति । श्राद्धकर्म्मणि मूलादिक्रमेणोपर्य्युपरि प्रदेशे पिण्डानां दानेन दाताऽप्युर्द्ध्वोर्द्ध्वगतिर्भवति । अग्रादिक्रमेणाधो-ऽधःप्रदेशे पिण्डानां दानेन दाताऽप्यधोधोगतिर्भवति ॥ १ ॥

मूलादिक्रमेण पिण्डदानमुपसंहरति तस्मादिति । यस्मादेवं, तस्मात् वृद्धिमत्सु इतरेषु पार्व्वणेषु च सर्व्वेषु श्राद्धेषु पिण्डदानार्थं-

गन्धादीन्निःक्षिपेत्तूष्णीं तत आचामयेद्द्विजान्।
अन्यत्राप्येष एव स्याद्यवादिरहितो विधिः॥ ३॥
दक्षिणाप्लवणे देशे दक्षिणाभिमुखस्य च।
दक्षिणाग्रेषु दर्भेषु एषोऽन्यत्र विधिः स्मृतः॥४॥

परिशिष्टप्रकाशः।

पिण्डेष्वमन्त्रकं गन्धपुष्पादीनर्पयित्वा ब्राह्मणाचमनं कारयेत्। एष एव पिण्डदानविधिः अन्यत्रापि पार्वणादौ यवदेवतीर्थोपवीत-दक्षिणोपचारशून्यः स्यात्॥ ३॥

न केवलं यवादिरहितः—

दक्षिणाप्लवे, न वृद्धाविव प्राचीनप्लवे दक्षिणामुखस्य दातुर्न प्राङ्मुखस्य। दक्षिणाग्रेषु दर्भेषु न प्रागग्रेषु। एष पिण्डदानविधिः पार्वणादौ मुनिभिः स्मृत इति॥ ४॥

प्रभा।

मास्तृतकुशानां मूलमध्याग्रप्रदेशेषु अत्यलग्नान् पिण्डान् दद्यात्। वृद्धिश्राद्धमानं मङ्गलकर्म्म॥ २॥

गन्धादीनिति। पिण्डेष्वमन्त्रकं गन्धादीन् निःक्षिपेत्। ततः श्राद्धभोक्तृब्राह्मणानाचामयेत्। लेपघर्षणप्रक्षालनादिभिर्मुखहस्त-शोधनं कारयेत्। अन्यत्र पार्व्वणेऽपि यवादिरहित एष एव विधिः स्यात्। यवादीत्यादिपदात् देवतीर्थोपवीतित्वप्राङ्मुखत्व-दक्षिणजानुपातदक्षिणोपचारपरिग्रहः॥ ३॥

दक्षिणाप्लवने इति। दक्षिणनिम्ने देशे दक्षिणाभिमुखस्य

अथाग्रभूमिमासिञ्चेत्सुसंप्रोक्षितमस्त्विति ।
शिवा आपः सन्त्विति च युग्मानेवोदकेन च ॥५॥
सौमनस्यमस्त्विति च पुष्पदानमनन्तरम् ।
अक्षतञ्चारिष्टञ्चास्तु अक्षतान् प्रतिपादयेत् ॥ ६ ॥

---

परिशिष्टप्रकाशः ।

आचमनानन्तरं ब्राह्मणाग्रभूमिं सुसंप्रोक्षितमस्त्विति प्रोक्षयेत् । शिवा आप इत्यादिना युग्मानेव नैकं उदकेन हस्ते आसिञ्चेत् ॥५॥

सौमनस्येति हस्ते पुष्पदानं कुर्य्यात् । अनन्तरमक्षतमित्यादिना यवान् दद्यात् ॥ ६ ॥

---

प्रभा ।

कर्त्तुः दक्षिणाग्रेषु कुशेषु एष पिण्डदानविधिः अन्यत्र पार्व्वणादौ स्मृतो मुनिभिः ॥ ४ ॥

अथेति । ब्राह्मणानामाचमनानन्तरं तेषामग्रभूमिं सुसंप्रोक्षितमस्त्वित्यनेनासिञ्चेत् । उदकेनेति वक्ष्यमाणमनुषज्यते । शिवा आप इत्यनेन युग्मानेव ब्राह्मणान् न त्वेकैकं, उदकेनासिञ्चेत् । हस्ते इति शेषः ॥ ५ ॥

सौमनस्यमिति । सौमनस्यमित्यादिना ब्राह्मणहस्ते पुष्पदानं कुर्य्यात् । तदनन्तरमक्षतञ्चेत्यादिना ब्राह्मणहस्ते यवान् दद्यात् । अक्षता यवाः । अक्षतास्तु यवाः प्रोक्ता इत्युक्तेः । दापयेदिति स्वार्थे णिच् । स्वयमशक्तावन्यद्वाराऽपि बुद्धिश्राद्धं कर्त्तव्यमिति प्रज्ञापनाभिप्रायेण वा ॥ ६ ॥

अक्षय्योदकदानन्तु अर्घ्यदानवदिष्यते।
षष्ठ्यैव नित्यं तत्कार्यं न चतुर्थ्या कदाचन ॥ ७॥

परिशिष्टप्रकाशः।

अर्घ्यजलदानवत् ज्येष्ठोत्तरकरयुग्मब्राह्मणकरे प्रत्येकं कुर्य्यादित्यर्थः। किन्तु तन्नामगोत्रान्तोच्चारितषष्ठ्यैव कुर्य्यात् न कदाचिदपि चतुर्थ्येति। षष्ठ्यैव नित्यमिति गोत्रनामान्ते संबुद्धिस्थाने षष्ठीं विधत्ते। न चतुर्थ्या कदाचनेति तस्मै ते स्वधेति चतुर्थीनिषेधकमित्यपुनरुक्तिः। अत्र गोभिलीयः—

"गोत्रं स्वरान्तं सर्व्वत्र गोत्रस्याक्षय्यकर्म्मणि।
गोत्रस्तु तर्पणे प्रोक्तः कर्त्ता एवं न मुह्यति।
सर्व्वत्रैव पितः प्रोक्तः पिता तर्पणकर्म्मणि।
पितुरक्षय्यदाने तु अक्षयां तृप्तिमिच्छता" ॥

तथा—

"शर्म्मन्नर्घ्यादिके कार्य्ये शर्म्मा तर्पणकर्म्मणि।
शर्म्मणोऽक्षय्यदाने तु पितृणां दत्तमक्षयम्" ॥ ७॥

प्रभा।

अक्षय्येति। अक्षय्योदकदानं पुनरर्घ्यदानवदिष्यते। अर्घ्यदानवदित्यनेन ज्येष्ठोत्तरकरत्वमात्रस्यातिदेशः पर्य्यवस्यति। अत्राप्यस्तु इत्यनुषज्यते, तेनाक्षय्यमस्तु इति प्रयोगः। अतएवैतदनन्तरं, प्रार्थनासु प्रतिप्रोक्ते इत्यादिकमाश्लस्येनोपपत्स्यते। तदक्षय्योदकदानं नित्यं षष्ठ्यैव कार्य्यमित्यनेन गोत्रसंबन्धनाम्नां

प्रभा।

षष्ठ्यन्ततामभिधत्ते। तेनार्घ्यप्रदानवदित्यतिदेशेन गोत्रसंबन्धनाम्नां संबोधनविभक्त्यन्तताऽत्र न भवति। उपदेशेनातिदेशबाधात्। शरमयवर्हिषा कुशमयवर्हिर्बाधवत्। तथाच स्नानसूत्रपरिशिष्टम्—

"गोत्रं स्वरान्तं सर्व्वत्र गोत्रस्याक्षय्यकर्म्मणि।
गोत्रस्तु तर्पणे प्रोक्तः कर्त्ता एवं न मुह्यति॥
सर्व्वत्रैव पितः प्रोक्तं पिता तर्पणकर्म्मणि।
पितुरक्षय्यकाले तु अक्षयां तृप्तिमिच्छता॥
शर्म्मन्नर्घ्यादिके कार्य्यं शर्म्मा तर्पणकर्म्मणि।
शर्म्मणोऽक्षय्यकाले तु पितॄणां दत्तदक्षयम्"॥

इति। तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यते ऽयनाय इति महेश्वरस्त्र्यम्बक एव नापरः इति चैवमादिवत् षष्ठ्येवेत्येवकारव्यवच्छेद्यं दर्शयति न चतुर्थी कदाचनेति। सोऽयं विहितप्रतिषेधः। विहितं केषाञ्चित् चतुर्थ्या अक्षय्योदकदानम्। तथाच स्मरन्ति—

"नान्दीमुखेभ्यश्चाक्षय्यं पितृभ्य इदमस्त्विति"।

इति। तदनेन निषिध्यते। तथाचोक्तम्। "विहितप्रतिषेधोवा" इति। यत्तु नारायणोपाध्यायैरुक्तम्। षष्ठ्येव नित्यमित्यनेन गोत्रनामान्ते सम्बुद्धिस्थाने षष्ठीं विधत्ते, न चतुर्थी कदाचनेति तस्मै ते स्वधेति चतुर्थीनिषेधकमित्यपुनरुक्तिरिति। तदसङ्गतम्। ते इति युष्मदः सम्बोध्यमानार्थवाचित्वात् षष्ठ्यानिर्देशे तस्याक्षसमवेतार्थतया प्रसक्त्यभावेन निषेधानुपपत्तेः। न ह्यप्रसक्तं

प्रार्थनासु प्रतिप्रोक्ते सर्व्वास्वेव द्विजोत्तमैः ।
पवित्रान्तर्हितान् पिण्डान् सिञ्चेदुत्तानपात्रकृत् ॥८॥

परिशिष्टप्रकाशः ।

अनन्तरञ्च—

सुसंप्रोक्षितमस्त्वित्याद्यासु पञ्चसु प्रार्थनासु ब्राह्मणैरस्तु सन्त्वि-

प्रभा ।

निषिध्यते । नित्यानुवादस्तु स्यात् । यच्च तत्त्वकृतां मतम् । अक्षय्योदकदाने न चतुर्थी कदाचनेत्यनेन ये चात्र त्वेति मन्त्रस्य निषेधेन अक्षय्योदकदानेतरत्र सर्व्वत्र ये चात्र त्वेति मन्त्रः पठनीय इति ज्ञाप्यते । अन्यथा अक्षय्योदकदाने तन्मन्त्रस्य प्रसक्त्यभावे निषेधो न सम्भवति । तत्तत्स्थाने विशिष्य गोभिलस्य तन्मन्त्रोपदेशस्तु प्रदर्शक इति । तदयुक्तम् । अक्षय्योदकदाने तन्मन्त्रस्याप्रसक्तेर्द्दर्शितत्वात् । न चतुर्थ्येत्यस्य विहितप्रतिषेधरूपत्वस्योक्तत्वाच्च । तस्मान्नायं ये चात्र त्वेति मन्त्रस्य निषेधः । किन्तु केषाञ्चिदभिमतायाश्चतुर्थ्या एवेति कथमनेन सर्व्वत्र ये चात्र त्वेति मन्त्रो ज्ञाप्यते इति शक्यते वक्तुम् । येन गोभिलस्य विशिष्योपदेशः प्रदर्शकः स्यात् । अर्घ्यदाने ये चात्र त्वेति मन्त्रोपदेशात् अक्षय्योदकदाने अर्घ्यदानवदित्यतिदेशाच्च प्रसक्तस्य तन्मन्त्रस्य निषेधोऽप्युपपद्यतएवेति कथमनेनानुपदिष्टस्थलेऽपि तन्मन्त्रो ज्ञाप्यते इति न खल्वधिगच्छामि । विस्तरेण चैतत् श्राद्धकल्पभाष्ये विवेचितमस्माभिरित्युपारम्यते ॥ ७ ॥

प्रार्थनास्विति । सुसंप्रोक्षितमस्तु इत्यादिकासु पञ्चसु प्रार्थनासु

परिशिष्टप्रकाशः ।

त्यादि उत्तरे प्रोक्ते स्वधावाचनस्थानेऽर्घ्यपात्रीयपवित्राच्छादितान् पिण्डान् नान्दीमुखेभ्यः पितृभ्यः प्रीयन्तामित्युक्त्वा सिञ्चेत् । अनन्तरं न्युब्जीकृतं पात्रमुत्तानं कृत्वा युग्मानेवेत्यादिवक्ष्यमाणं कुर्य्यात् । गोभिलभाष्यकृता तु, सुसंप्रोक्षितमस्त्वित्यादि स्वधावाचनान्तं कृत्वा कृतोत्तानपात्रः तत्पवित्राणि पिण्डानामुपरि दत्वा पिण्डानूर्ज्जं वहन्तीरिति सिञ्चेदिति व्याख्यातम् ॥ ८ ॥

---

प्रभा ।

यथायथमस्तु सन्त्विति ब्राह्मणैः प्रत्युत्तरे कृते पवित्रव्यवहितान् पिण्डान् न्युब्जपात्रमुत्तानं कृत्वा सिञ्चेत् । यत्तु पिण्डसेचनानन्तरं न्युब्जपात्रमुत्तानं कृत्वा वक्ष्यमाणं कुर्य्यादिति नारायणोपाध्यायेन व्याख्यातम् । तदसमीचीनम् । यथाश्रुतार्थपरित्यागे मानाभावात् । मीमांसाभाष्यकारेणापि शब्दस्य श्रवणमात्रात् योऽर्थोऽवगम्यते स श्रुत्याऽवगम्यते इत्युक्तम् । न च श्रुतिः परित्यक्तुं युक्ता । गृह्यभाष्ये भट्टनारायणेनापि उत्तानपात्रकृदिति परिषेचनकर्त्तृविशेषणतयैव व्याख्यातम् । यच्चोक्तं तत्त्वकारेण उत्तानपात्रकृदिति यथाश्रुतदर्शनात् परिषेचनकर्त्तृविशेषणतया भट्टेन यद्व्याख्यातं तद्गोभिलश्राद्धसूत्रानवलोकनेन । तथाच परिषेचनसूत्रानन्तरं गोभिलः । उत्तानं पात्रं कृत्वा यथाशक्तिदक्षिणां दद्यादिति ।

तत्र ब्रूमः । श्राद्धकल्पे तावत् तत्त्वकारोक्तपाठो न दृश्यते ।

प्रभा।

तत्र खल्वेवं पठ्यते। स्वधानिनयनीये धारां दद्यादूर्ज्जं वहन्तीरित्युत्तानं पात्रं कृत्वा विश्वे देवाः प्रीयन्तामिति दैवे वाचयित्वा पिण्डपात्राणि चालयित्वा यथाशक्ति दक्षिणां दद्यात् इति। व्याख्यातस्थानयैवानुपूर्व्व्या ग्रन्थोऽयं भाष्यकृद्भिः। तत्र तावत् उत्तानं पात्रं कृत्वा इति मध्यपठितस्य विशेषाभावात् पूर्व्वसूत्रप्रतीकत्वमपि शक्यते वक्तुं परसूत्रप्रतीकत्वमपि। प्रयोगस्योभयथा दर्शनात्। तथाहि अभ्युदिते सूर्य्ये देवदत्तः प्रातराशं भुङ्क्ते चंक्रमणं कृत्वा मध्यन्दिने स्नात्वा वाससी परिधायापूपान् भक्षयति इत्यत्र यदि अभ्युदिते सूर्य्ये देवदत्तः प्रथमं चंक्रमणं करोति ततः प्रातराशं भुङ्क्ते तदा चंक्रमणं कृत्वेति पूर्व्वस्यैव वाक्यस्य प्रतीकं विपर्य्यये च परस्य। प्रयुञ्जते चैवं मुनयः अवनेजनदानप्रत्यवनेजनेषु नामग्राहमित्यादौ। तदेवमुभयथा प्रयोगदर्शनादुत्तानं पात्रं कृत्वेत्यस्य परसूत्रप्रतीकतायां न प्रमाणम्। भगवतः कात्यायनस्य वचनात्तु पूर्व्वसूत्रप्रतीकत्वमेव तस्य निर्णेतव्यम् भवति। यथाश्रुतार्थपरित्यागस्यानुचित इत्युक्तमादावेव। स खल्वस्यष्टानां कर्म्मणां विधिं सम्यग् दर्शयिष्ये इति प्रतिज्ञातवान्। तदलं मान्यानामुपरि कटाक्षपातेन। पवित्रान्तर्हितानित्यभिधानात् पिण्डानामन्तर्धानार्थं पवित्रमुत्पादयितव्यम्। यत्त्वर्घ्यीयपवित्रैरन्तर्धानवर्णनम्। तदसङ्गतम्। विनियुक्तविनियोगे मानाभावात्। अन्यथा पिण्डदानार्थं रेखाकरणमपि तेनैव पवित्रेण स्यात्॥ ८॥

युग्मानेव स्वस्तिवाच्यानङ्गुष्ठग्रहणं सदा ।
कृत्वा धुर्य्यस्य विप्रस्य प्रणम्यानुव्रजेत्ततः ॥ ९ ॥

---

परिशिष्टप्रकाशः ।

युग्मानेव नैकं दक्षिणादानेन स्वस्तिवाच्य, धुर्य्यस्य पंक्तिमूर्द्धन्यस्य ब्राह्मणस्यानङ्गुष्ठपाणिग्रहणं कृत्वा प्रणम्य ततोऽनुगच्छेत् । अत्र च दक्षिणा द्राक्षामलकादि । तथा ब्रह्मपुराणम्—

"द्राक्षामलकमूलानि यवांश्चाथ निवेदयेत् ।
तान्येव दक्षिणार्थन्तु दद्याद्विप्रेषु सर्व्वदा" ॥

मूलमार्द्रकादि निवेदयेत् श्राद्धेष्विति । वृद्धौ च गोभिलीयै-र्मातृश्राद्धं न कर्त्तव्यम् । न योषिद्भ्यः पृथग्दद्यादिति वक्ष्यमाण-वचनाद्गोभिलेनानुक्तत्वाच्च । अन्यैस्तु कर्त्तव्यमेव । तथाच शाता-तपः—

"मातृश्राद्धं तु पूर्वं स्यात् पितॄणां तदनन्तरम् ।
ततो मातामहानां च वृद्धौ श्राद्धत्रयं स्मृतम् ॥
त्रिष्वप्येतेषु युग्मांस्तु भोजयेद्ब्राह्मणान् शुचिः ।
प्रदक्षिणं तु सव्येन प्रदद्याद्दैवपूर्व्वकम्" ॥

---

प्रभा ।

युग्मानेवेति । युग्मानेव नैकैकं दक्षिणादानेन स्वस्तिवाच्य धुर्य्यस्य पंक्तिमूर्द्धन्यस्य ब्राह्मणस्यानङ्गुष्ठपाणिग्रहणं कृत्वा प्रणम्य

एष श्राद्धविधिः कृत्स्न उक्तः संक्षेपतो मया ।
ये विदन्ति न मुह्यन्ति श्राद्धकर्म्मसु ते क्वचित् ॥१०॥

---

परिशिष्टप्रकाशः ।

इति । अनेन च मातृश्राद्धस्यापि सदैवत्वाभिधानात् वृद्धौ मातृश्राद्धमदैवमिति यत्कैश्चिदुक्तम्, तन्निरस्तम् । यत्तु मार्कण्डेय-पुराणम्—

"वैश्वदेवविहीनं तु केचिदिच्छन्ति मानवाः" ।

इति । तच्छाखिविशेषव्यवस्थितम् । अतएव लघुहारीतः—

"मातृश्राद्धं तु युग्मैः स्यात् सदैवं प्राङ्मुखैः पृथक्" ।

इति ॥ ८ ॥

उपसंहरति—

एषः प्रकृतः श्राद्धविधिः अल्पग्रन्थेन मया कृत्स्न उक्तः । ये इमं श्राद्धविधिं जानन्ति श्राद्धक्रियाविषयेषु न भ्राम्यन्ति ॥ १० ॥

---

प्रभा ।

ताननुगच्छेत् । श्राद्धकर्त्ता दक्षिणां दद्यात् ब्राह्मणाय स्वस्तीति ब्रूयुरिति स्वस्तिवाच्येत्यस्यार्थः ॥ ८ ॥

एष इति । एषोऽनन्तरोक्तः कृत्स्न एव श्राद्धविधिरल्पेन ग्रन्थेन मया कथितः । ये खल्विमं श्राद्धविधिं जानन्ति ते श्राद्ध-कर्म्मसु क्वचिदपि न मोहं प्राप्नुवन्ति ॥ १० ॥

इदं शास्त्रञ्च गृह्यञ्च परिसंख्यानमेवच ।
वसिष्ठोक्तञ्च यो वेद स श्राद्धं वेद नेतरः ॥ ११ ॥

इति चतुर्थः खण्डः ।

---

परिशिष्टप्रकाशः ।

श्रोतृप्रोत्साहार्थं स्वग्रन्थं स्तौति—

इदमस्मदुक्तं शास्त्रं, गृह्यं गोभिलोक्तं, परिसंख्यानाख्यञ्च ग्रन्थं स्वनामप्रसिद्धं, वसिष्ठोक्तं छान्दोग्यगृह्यनामकं, यो जानाति स श्राद्धं जानीते नाऽन्य इति ॥ ११ ॥

चतुर्थः खण्डः ॥

---

प्रभा ।

इदमिति । इदं मदुक्तं शास्त्रं, गोभिलोक्तं गृह्यं, परिसंख्यानं स्वनामप्रसिद्धं श्राद्धमन्त्रावाहनादिप्रतिपादकं, वसिष्ठोक्तं श्राद्धकल्पञ्च यो जानाति स श्राद्धं जानाति नेतरो नोक्तग्रन्थचतुष्कानभिज्ञः ॥ ११ ॥

इति चतुर्थः खण्डः ।

## पञ्चमः खण्डः ।

असकृद् यानि कर्म्माणि क्रियेरन् कर्म्मकारिभिः ।
प्रतियोगं नैव स्युर्मातरः श्राद्धमेवच ॥ १ ॥

---

### परिशिष्टप्रकाशः ।

कर्म्मादिषु च सर्व्वेषु मातृपूजा श्राद्धं चेत्युक्तम् । तत्र केषु चित्कर्म्मसु विशेषमाह—

यानि कर्म्माणि कर्म्मकर्त्ता पुनः पुनः प्रतिदिनं प्रतिमासं प्रतिवत्सरं च क्रियन्ते । आवस्थ्याग्न्याहायस्थादीनि वैश्वदेववलि-कर्म्मदर्शपौर्णमासादीनि च । तेषु प्रथमप्रयोगे एव श्राद्धं मातृ-पूजा च न द्वितीयादिप्रयोगेष्वपि ॥ १ ॥

---

### प्रभा ।

सर्व्वेषु कर्म्मादिषु मातृपूजा श्राद्धञ्चोक्तम् । तत्र विशेषमाह असकृदिति । यानि कर्म्माणि वैश्वदेववलिकर्म्मचन्द्रदर्शनश्रवणा-कर्म्मादीनि कर्म्मकर्त्ता प्रतिदिनं प्रतिमासं प्रतिवर्षञ्च पुनः पुनः क्रियन्ते, तेषु प्रथमप्रयोग एव मातृपूजा श्राद्धञ्च कर्त्तव्यं न प्रतिप्रयोगम् । सन्दंशपतितयोर्वसोर्धारापातनायुष्यमन्त्रजपयोर-प्येवैव व्यवस्था । दर्शपौर्णमासौ तु प्रतिमासकर्त्तव्यस्य कर्म्मणो-न युक्तमुदाहरणम् । तयोः पृथक् श्राद्धाभावस्य वक्ष्यमाणत्वात् । वैश्वदेववलिकर्म्मणी त्वनग्नेरपि स्तः ॥ १ ॥

आधाने होमयोश्चैव वैश्वदेवे तथैवच ।
बलिकर्म्मणि दर्शे च पौर्णमासे तथैवच ॥ २ ॥
नवयज्ञे च यज्ञज्ञावदन्त्येवं मनीषिणः ।
एकमेव भवेच्छ्राद्धमेतेषु न पृथक् पृथक् ॥ ३ ॥

---

परिशिष्टप्रकाशः ।

असकृत् क्रियमाणमध्ये होमादिनवयज्ञान्तेषु विशेषमाह— आधाने अग्न्याधाने, सायंप्रातर्होमादिनवयज्ञान्तेषु कर्म्मसु, न केवलं प्रतियोगं प्रतिकर्म्मापि श्राद्धं न कर्त्तव्यम् । किं त्वाधानादौ कृते श्राद्धे सर्वेष्वेव कृतं भवेत् । एवं चान्येषु श्रावण्यादिषु प्रतिकर्म्म श्राद्धमित्युक्तं भवति । नवयज्ञ आग्रयणेष्टिः । शेषं सुगमम् । एवं ज्योतिष्टोमपशुयागादिकमपि ये प्रत्यब्दं कुर्व्वन्ति, तैरपि प्रथमप्रयोग एव प्रतिकर्म्मादौ श्राद्धं कर्त्तव्यम् । असकृदिति वचनात् ॥ २ ॥ ३ ॥

---

प्रभा ।

असकृत् क्रियामाणेषु प्रतिप्रयोगं श्राद्धं नास्तीति विशेषमुक्त्वा कुत्रचित् प्रतिकर्म्माऽपि श्राद्धं नास्तीति विशेषान्तरमाह आधाने इति द्वाभ्याम् । अग्न्याधानसायंप्रातर्होमवैश्वदेवबलिकर्म्मदर्शपौर्णमासनवयज्ञेषु विषये यज्ञज्ञा मनीषिण एवं वदन्ति । किं वदन्ति ? तदुच्यते । एतेषु कर्म्मस्वेकमेव श्राद्धं भवेत् न पृथक् पृथक् प्रतिकर्म्मादौ । एवञ्चाग्न्याधानादौ श्राद्धे कृते सायंप्रातर्होमादौ सर्व्वत्रैव श्राद्धं कृतं भवेदित्युक्तं भवति ॥ २ ॥ ३ ॥

नाष्टकासु भवेच्छ्राद्धं न श्राद्धे श्राद्धमिष्यते।
न सोष्यन्तीजातकर्मप्रोषितागतकर्मसु ॥ ४ ॥

परिशिष्टप्रकाशः।

कर्मादिष्वित्येतस्यापवादमाह—

अष्टकाकर्मसु त्रिषु श्राद्धं न भवेत्पार्वणादिश्राद्धे च। आसन्नप्रसवायाः सुखप्रसवार्थं विहिते सोष्यन्तीहोमे च या तिरश्चीत्यादिमन्त्रके सूत्रोक्ते। व्रीहियवौ पेषयित्तयैवावृता यया शुद्धा दक्षिणस्य पाणेरङ्गुष्ठेनोपकनिष्ठिकया चाङ्गुल्याभिसंगृह्य कुमारस्य जिह्वां निर्माष्टि इयमाज्ञेदमिति सूत्रोक्तजातकर्मणि। विप्रोष्य ज्येष्ठस्य पुत्रस्य उभाभ्यां पाणिभ्यां मूर्द्धानं परिगृह्य जपेत्। अङ्गादङ्गात्सम्भवसीति। पशूनां त्वा हिङ्कारेणाभिजिघ्रामीत्यभिप्राय यथार्थम्। एवमेवापरेषाम्। यथाज्येष्ठं यथोपलब्धं वा स्त्रियास्तूष्णीं मूर्द्धन्यभिघ्राणमिति सूत्रोक्तप्रोषितागतपितृकर्त्तव्यकर्मसु श्राद्धं नेष्यते मुनिभिः ॥ ४ ॥

प्रभा।

विशेषान्तरमाह नाष्टकास्विति। गृह्योक्तेषु त्रिष्वष्टकायागेषु, श्राद्धेऽन्वष्टक्यपिण्डपितृयज्ञान्वाहार्यादौ गृह्योक्ते, आसन्नप्रसवायाः सुखप्रसवार्थं गृह्यविहिते सोष्यन्तीहोमे, जातकर्मणि, प्रोषितागतकर्मणि च प्रवासादागतस्य पितुः पुत्रादिमूर्द्धाभिघ्राणरूपे गृह्योक्त एव, श्राद्धं न भवेत्। सर्वाण्येवान्वाहार्यवन्तीति गृह्यसूत्रेण तेषु प्राप्तं श्राद्धं प्रतिषिध्यते ॥ ४ ॥

विवाहादिः कर्म्मगणोय उक्तो-
गर्भाधानं शुश्रुम यस्य चान्ते ।
विवाहादावेकमेवात्र कुर्य्यात्
श्राद्धं नादौ कर्म्मणः कर्म्मणः स्यात् ॥ ५ ॥

परिशिष्टप्रकाशः ।

विवाह आदिर्य्यस्य । दक्षिणेन पाणिना उपस्थमभिस्पृशेत् विष्णो-र्योनिं कल्पयत्वित्येतयर्चा गर्भं धेहि सिनिवालीति च इति सूत्रोक्तं गर्भाधानं चान्ते यस्य कर्म्मगणस्य, चतुर्थीहोमसमशनीय-चरुहोमगृहप्रवेशयानारोहणचतुष्पथामन्त्रणाक्षभङ्गसमाधानार्थहो-मादिरूपस्य श्रुतवन्तः स्म । अत्र कर्म्मगणे विवाहादौ एकमेव श्राद्धं कुर्यात् न प्रतिकर्म्मादौ । एकेनैव कृतेन श्राद्धेन सर्वाण्ये-तानि श्राद्धवन्ति भवन्तीति ॥ ५ ॥

प्रभा ।

विवाहादिरिति । विवाह आदिर्य्यस्य कर्म्मगणस्य, यस्य कर्म्मगणस्यान्ते गर्भाधानं श्रुतवन्तोवयं, अस्मिन् विवाहादिकर्म्म-गणे विवाहस्यादौ एकमेव श्राद्धं कुर्य्यात् प्रतिकर्म्मादौ श्राद्धं न स्यात् । तथाच समशनीयचरुहोमयानारोहणाक्षभङ्गसमा-धानार्थहोमचतुष्पथामन्त्रणादिषु चतुर्थीहोमान्तेषु विवाहादा-वेकमेव श्राद्धं कर्त्तव्यं न प्रतिकर्म्मादौ । गर्भाधाने तु कर्त्तव्यमेव । तस्य गणाद्बहिर्भूतत्वात् । यस्य चेति चकारार्थो गर्भाधानस्य गणान्त-

प्रभा।

र्भूतत्वं व्यवच्छिनत्ति। शुश्रुम यस्य चान्ते इति वचनभङ्ग्यापि तस्य गणाद्वहिर्भूतत्वमवगम्यते। गणस्यान्ते गर्भाधानं श्रूयते न त्वेतत् गणान्तर्गतमित्यभिप्रायः। चैत्रस्यान्ते पर्व्वत इतिवत्। यच्च अन्तशब्दोऽत्र गणस्यावयवार्थः दशान्तः पट इतिवत्। समीपार्थत्वे उपलक्षणं स्यात्। ततश्च विशेषणोपलक्षणसन्देहे विशेषणत्वेन ग्रहणं न्याय्यमिति तत्त्वकृद्भिरुक्तम्। तच्चिन्त्यम्। वैयधिकरण्येन निर्द्देशात्। काममन्ते भवेयातामिति, तस्यान्ते सावित्रचरुरिति चैवमादिवदन्तशब्दस्यावसानार्थताऽवगतेः। न हि काम्य-सामान्ये वैश्वदेववलिकर्म्मणी नित्यविशेषोक्तवैश्वदेववलिकर्म्मणो-रवयवौ, किन्तु तयोरवसाने भवतः। एवं सावित्रचरुर्न व्रतान्तर्गतः किन्तु व्रतावसाने क्रियते। तथात्रापि गर्भाधानं न गणान्तर्गतं किन्तु गणावसाने श्रूयते। स्मृत्यर्थसन्देहे स्मृत्यन्तर-संवादादेवार्थनिर्णयस्य तेषामन्येषां चानुमतत्वाच्च। स्मृत्यन्तरे च दर्भाधाने श्राद्धमुक्तम्—

"निषेककाले सोमे च सीमन्तोन्नयने तथा।
ज्ञेयं पुंसवने चैव श्राद्धं कर्म्माङ्गमेवच" ॥

इत्येवमादौ। यदप्युक्तम्, एतद्वचनं छन्दोगेतरपरमिति। तदपि चिन्त्यम्। प्रमाणाभावात्। इतरेतराश्रयप्रसङ्गाच्च। सिद्धे ह्येतद्वचनस्य छन्दोगेतरपरत्वे अन्तशब्दोऽवयवार्थो भवेत् तस्मिंश्च सत्येतद्वचनस्य छन्दोगेतरपरत्वमिति ॥ ५ ॥

प्रदोषे श्राद्धमेकं स्याद्गोनिष्कालप्रवेशयोः ।
न श्राद्धं युज्यते कर्त्तुं प्रथमे पुष्टिकर्म्मणि ॥ ६ ॥

परिशिष्टप्रकाशः ।

गाः प्रकाल्यमाना अनुमन्त्रयेत इमा मे विश्वतो वीर्य्य इति प्रत्यागता इमा मधुमतीर्मह्यमिति गोनिःसारणप्रवेशनयोः सूत्रोक्तयोः प्रवेशादौ प्रदोषे श्राद्धं तन्त्रेणैकं भवेत्। न च निष्कालनेऽपि पृथगिति। पुष्टिकामः प्रथमजातस्य वत्सस्य प्राक्मातुः प्रलेहनात् जिह्वया ललाटमुल्लिह्य निगिरेत् गवां श्लेष्मासीति, पुष्टिकाम एव संप्रजातासु निशायां गोष्ठेऽग्निमुपसमाधाय विलयनं जुहुयात् संग्रहणसंग्रहाणेति, पुष्टिकाम एव सम्प्रजातास्वौदुम्बरेणासिना वत्समिथुनयोर्लक्षणं करोतीति पुष्टिकर्म्मत्रये सूत्रोक्ते प्रथमे पुष्टिकर्म्मणि श्राद्धं कर्त्तुं न युक्तम्। अपरपुष्टिकर्म्मद्वये श्राद्धं कर्त्तव्यं भवतीति ॥ ६ ॥

प्रभा ।

प्रदोषे इति। गाः प्रकाल्यमाना अनुमन्त्रयेतेमा मे विश्वतोवीर्य्य इति, प्रत्यागता इमा मधुमतीर्मह्यमिति इति गोभिलेन गवां निष्कालनप्रवेशावुक्तौ। तयोः प्रदोषे प्रवेशे एकं श्राद्धं कार्य्यं न निष्कालनेऽपि। पुष्टिकामः प्रथमजातस्य वत्सस्य प्राक्मातुः प्रलेहनाज्जिह्वया ललाटमुल्लिह्य निगिरेत् गवां श्लेष्मासीति, पुष्टिकाम एव सम्प्रजातासु निशायां गोष्ठेऽग्निमुपसमाधाय विलयनं जुहुयात् संग्रहणसंग्रहाणेति। पुष्टिकामएव संप्रजातास्वौदुम्बरेणा-

हलाभियोगादिषु तु षट्सु कुर्य्यात् पृथक् पृथक्।
प्रतिप्रयोगमन्येषामादावेकं तु कारयेत्॥ ७॥

परिशिष्टप्रकाशः।

अथातोहलाभियोगः। पुष्ये नक्षत्रे स्थालीपाकं श्रपयित्वा एताभ्यो देवताभ्यो जुहुयात्। इन्द्राय मरुद्भः पर्ज्जन्यायाशन्यै भगाय सीतामाशामरड़ामनघां च यजेत। एता एव देवताः सीतायज्ञखलयज्ञप्रवपणप्रलवनपर्य्ययणेष्विति सूत्रोक्तेषु हलाभियोगादिषु षट्सु एकैककर्मादौ पृथक् पृथक्, एकैककर्म्मणः प्रतिप्रयोगं च श्राद्धं कुर्यात्। अन्येषां नवयज्ञश्रावणीकर्मादीनामादावेकं कारयेत्। न तु प्रतिप्रयोगम्। हलाभियोगो हलस्याभिमुख्येन योजनं कृष्यारम्भ इत्यर्थः। सीतायज्ञः पक्केषु धान्येषु कृष्टक्षेत्रमध्ये। खलयज्ञः खले। प्रवपणं बीजवपनम्। प्रलवनं धान्यच्छेदनम्। पर्य्ययणं धान्यानां खलाद्गृहानयनम्॥ ७॥

प्रभा।

सिना वत्सिमिथुनयोर्लक्षणं करोति पुंस एवाग्रेऽथ स्त्रियाभुवनमसि साहस्रमिति। इति गोभिलेन गवां पुष्टिकर्म्मत्रयमुक्तम्। तत्र प्रथमं यदिदं पुष्टिकर्म्म प्रथमजातस्य वत्सस्य प्राङ्मातुः प्रलेहनात् जिह्वया ललाटमुल्लिख्य निगरणरूपं, तत्र श्राद्धं कर्त्तुं न युज्यते। श्राद्धकरणोपयुक्तकालासम्भवादिति भावः॥ ६॥

हलाभियोगादिष्विति। अथातो हलाभियोगः पुष्ये नक्षत्रे स्थालीपाकं श्रपयित्वैताभ्यो देवताभ्यो जुहुयादिन्द्राय मरुद्भ्यः

बृहत्पत्त्रक्षुद्रपशुस्वस्त्यर्थं परिविश्यतोः।
सूर्य्येन्द्वोः कर्म्मणी ये तु तयोः श्राद्धं न विद्यते ॥ ८ ॥

परिशिष्टप्रकाशः।

वृक्ष इवेति पञ्चर्चं इति प्रकृते, द्वितीयया आदित्ये परिविश्यमानेऽक्षततण्डुलान् जुहुयात् बृहत्पत्रस्वस्त्ययनकामः। तृतीयया चन्द्रमसि तिलतण्डुलान् क्षुद्रपशुस्वस्त्ययनकाम इति सूत्राभ्यां परिविशति सूर्य्ये हस्त्यश्वादिबृहद्वाहनस्वस्त्ययनार्थं, चन्द्रे परिविशति अजमेषादिक्षुद्रपशुस्वस्त्ययनार्थं होमाख्यकर्मद्वयमुक्तम्। तयोः श्राद्धन्नास्तीति ॥ ८ ॥

प्रभा।

पर्जन्यायाग्न्ये भगाय सीतामाशामरड़ामनघाञ्च यजेत एता एव देवताः सीतायज्ञखलयज्ञप्रवपणप्रलवनपर्य्ययणेषु इति गोभिलोक्तेषु हलाभियोगादिषु षट्सु कर्म्मसु पृथक् पृथक् प्रतिकर्म्मादौ श्राद्धं कुर्य्यात्। न केवलं पृथक् पृथक्, किन्तु तेषां हलाभियोगादीनां षस्णां प्रतिप्रयोगञ्च श्राद्धं कुर्य्यात्। अन्येषान्तु श्रवणाकर्म्मादीनां प्रतिप्रयोगं न श्राद्धं किन्तु प्रथमप्रयोगे एकं श्राद्धं कुर्य्यादित्युक्तस्यैवानुवादः शिष्याणामव्यामोहार्थः ॥ ७ ॥

बृहत्पत्त्रेति। पत्त्रं वाहनमित्यनर्थान्तरम्। बृहत् पत्त्रं हस्त्यश्वादि। क्षुद्रपशुरजाव्यादिः। अयमर्थः। वृक्ष इवेति पञ्चर्चः इत्यधिकृत्य द्वितीययाऽऽदित्ये परिविश्यमानेऽक्षततण्डुलान् जुहुयाद्बृहत्पत्रस्वस्त्ययनकामः तृतीयया चन्द्रमसि तिलतण्डुलान्

न दशाग्रन्थिके नैव विषवद्दष्टकर्म्मणि ।
क्रिमिदष्टचिकित्सायां नैव शेषेषु विद्यते ॥ ८ ॥

---

परिशिष्टप्रकाशः ।

अपरमपवादमाह—

प्रतिभयेऽध्वनि वस्त्रदशानां ग्रन्थीन् बध्नीतेपेत्य वसनवतः स्वाहाकारान्ताभिरित्यनेन सूत्रेण वर्त्मनि तस्करादिभयेष्वद्धं वा एकछन्दस्यमित्यादिऋक्‌त्रयेण प्रकृतेन स्वाहान्तेन दशासु ग्रन्थित्रयबन्धनमुक्तम् । तथा, माभैर्षोर्मा मरिष्यसीति विषवता दष्टमद्भिरभ्युक्षन् जपेत् । हतस्ते अत्रिणा क्रिमिरिति क्रिमिमन्तं देशमभ्युक्षन् जपेदिति सूत्राभ्यां विषचिकित्सा चोक्ता । तदेतेषु कर्मसु, एतदनन्तरोक्तेषु अर्हणीयलिंगादीनां पाद्यार्घ्यविष्टरमधुपर्कदानादिषु, न श्राद्धमस्तीति ॥ ८ ॥

---

प्रभा ।

क्षुद्रपशुस्वस्त्ययनकाम इति सूत्राभ्यां गोभिलेन परिविश्यमानयोः सूर्य्याचन्द्रमसोर्यथाक्रमं हस्त्यश्वक्षुद्रपशुस्वस्त्ययनार्थं ये कर्म्मणी विहिते, तयोः श्राद्धं नास्ति । परिवेशश्च,

"वातेन मण्डलीभूताः सूर्य्याचन्द्रमसोः कराः ।
मालाभा व्योम्नि दृश्यन्ते परिवेशः स उच्यते" ॥

इत्युक्तलक्षणः ॥ ८ ॥

न दशाग्रन्थिके इति । प्रतिभयेऽध्वनि वस्त्रदशानां ग्रन्थीन् बध्नीत उपेत्य वसनवतः स्वाहाकारान्ताभिः सहायानाञ्च स्वस्त्ययनं

गणशः क्रियमाणेषु मातृभ्यः पूजनं सकृत् ।
सकृदेव भवेच्छ्राद्धमादौ न पृथगादिषु ॥ १० ॥

---

परिशिष्टप्रकाशः ।

गणशः समुदायेन क्रियमाणेषु मातृभ्यः पूजा सर्वदा सकृदेव । यथा, यजनीयेऽहनि नित्ये नवयज्ञवास्तुशमनगोयज्ञाश्वयज्ञेषु समुदायेन क्रियमाणेषु श्राद्धमपि तेषु गणादौ एकमेव, न कर्मसंख्यानुसारेण श्राद्धान्यपि तावत्संख्यानीति ॥ १० ॥

---

प्रभा ।

भवतीति गोभिलोक्ते वस्त्रदशानां ग्रन्थिबन्धने, तथा मा भैषीर्न मरिष्यसीति विषवता दष्टमद्भिरभ्युक्षन् जपेत् इति गोभिलोक्ते विषवता दष्टस्य कर्म्मणि, तथा हस्तस्ते अत्रिणा क्रिमिरिति क्रिमिमन्तं देशमद्भिरभ्युक्षन् जपेत् पशूनाञ्चेच्चिकीर्षेदपराह्णे सीतालोष्टमाहृत्य वैहायसं निदध्यात् तस्य पूर्व्वाह्णे पांशुभिः परिकिरन् जपेदिति तेनैवोक्तायां क्रिमिदष्टस्य चिकित्सायां, एवं तदनन्तरं तेनैवोक्तेषु अर्हणीयाय पाद्यार्घ्यप्रदानादिषु श्राद्धं नास्ति ॥ ९ ॥

गणश इति । गणशब्दः संघवचनः । एकदिने क्रियमाणेष्वनेकेषु कर्म्मसु, यथा यजनीयदिने नवयज्ञवास्तुयज्ञगोयज्ञाश्वयज्ञेषु क्रियमाणेषु, अन्येष्वप्येवंविधेषु, गणस्यादौ मातृपूजनं श्राद्धञ्च सकृदेव भवति न तु गणान्तर्गतानां कर्म्मणां प्रत्येकमादौ पृथक् पृथक् मातृपूजनं श्राद्धञ्च कर्त्तव्यम् ॥ १० ॥

यत्र यत्र भवेच्छ्राद्धं तत्र तत्र च मातरः।
प्रासङ्गिकमिदं प्रोक्तमतः प्रकृतमुच्यते ॥ ११ ॥

पञ्चमः खण्डः।

---

परिशिष्टप्रकाशः।

पूज्या इति शेषः। कर्मादिष्वित्यनेनैव वैदिककर्मादौ यद्वृद्धिश्राद्धं तत्र पूजोपक्रमे मातृपूजोक्ता, इदानीं पुत्रजन्ममुखदर्शनाद्यन्तेऽपि यच्छ्राद्धं तत्रापि मातृपूजेति यत्र यत्र इत्यनेनोक्तमित्यपुनरुक्तिः। प्रासङ्गिकमिदं प्रोक्तमतःप्रकृतमुच्यते, इति। इदं श्राद्धं मातृपूजनं च सूत्रे यत्प्रकृतमाधानं तत्प्रसङ्गसिद्धमुक्तमतः परं प्रकृतमाधानमुच्यत इति ॥ ११ ॥

---

प्रभा।

यत्र यत्रेति। यत्र यत्र श्राद्धं भवति तत्र तत्रैव मातरः पूजनीयाः। तदनेन यत्राष्टकादौ श्राद्धं न भवति तत्र मातृपूजापि न कर्त्तव्येत्युक्तं भवति। वसोर्धारापातनायुष्यमन्त्रजपयोरपि तत्राकरणं पूर्व्वमेव व्यवस्थापितमस्माभिः। मातृपूजादिकं, श्राद्धविधिः, तत्र विशेषः, कर्म्मविशेषे श्राद्धादिनिषेधश्चेत्येतत् सर्व्वं सर्व्वाण्येवान्वाहार्य्यवन्तीति गोभिलसूत्रस्पष्टीकरणप्रसङ्गेनोक्तम्। अतः परं प्रकृतमग्न्याधानमुच्यते ॥ ११ ॥

इति पञ्चमः खण्डः।

## षष्ठः खण्डः ।

आधानकाला ये प्रोक्तास्तथा याश्चाग्नियोनयः ।
तदाश्रयोऽग्निमादध्यादग्निमानग्रजो यदि ॥ १ ॥
दाराधिगमनाधाने यः कुर्यादग्रजाग्रिमः ।
परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्वजः ॥ २ ॥

परिशिष्टप्रकाशः ।

ब्रह्मचारी वेदमधीत्यान्त्यां समिधमभ्याधास्यन् । जायाया-वा पाणिं जिघृक्षन्, इत्यादिना येऽग्न्याधानकाला उक्ताः, याश्च वैश्यकुलादम्बरीषाद्वेत्यादिनाऽग्नियोनय उक्तास्तदनुरुध्याग्न्याधानं कुर्य्यात् । यद्यग्रजोऽग्निमानिति ॥ १ ॥

अनग्नौ तु ज्येष्ठेऽग्न्याधाने दोषमाह—

ज्येष्ठभ्रातुरग्रकालवर्त्ती यो विवाहाग्न्याधाने कुर्य्यात् स परिवेत्ता विज्ञेयो ज्येष्ठश्च परिवित्तिरिति ॥ २ ॥

प्रभा ।

आधानकाला इति । गोभिलेन, ब्रह्मचारी वेदमधीत्यान्त्यां समिधमभ्याधास्यन्नित्यादिना ये आधानकाला उक्ताः, वैश्यकुला-द्वाम्बरीषाद्वाऽग्निमाहृत्याभ्यादध्यादिना च या अग्नियोनय उक्ताः, तदाश्रयः सन्नग्न्याधानं कुर्य्यात् यद्यग्रजोऽग्निमान् भवति । तदने-नाग्रजस्यानग्निमत्त्वेऽनुजेनाग्न्याधानं न कार्य्यमित्युक्तं भवति ॥१॥

अग्रजस्यानग्निमत्त्वेऽनुजेनाग्न्याधाने कृते किं स्यात् ?

परिवित्तिपरिवेत्तारौ* नरकं गच्छतो ध्रुवम् ।
अचीर्णप्रायश्चित्तौ तौ† पादोनफलभागिनौ ॥ ३ ॥

परिशिष्टप्रकाशः ।

तथाच को दोष इत्याह—

तौ पूर्व्वार्द्धोक्तौ अकृतप्रायश्चित्तौ इतरोपपातकफलस्य पादोनफलस्य भागिनौ ।

"परिवित्तिताऽनुजेन परिवेदनमेव च" ।

इति मनुना उपपातकगणे इयमिदं पठितमिति ॥ ३ ॥

प्रभा ।

तदाह दाराधिगमनेति । दाराधिगमनं विवाहः । आधानमग्न्याधानम् । अग्रजेन विवाहे अग्न्याधाने चाकृते योऽनुजः विवाहमग्न्याधानं च करोति, स परिवेत्ता अग्रजस्तु परिवित्तिर्विज्ञेयः ॥ २ ॥

अस्तु तावत्, कस्तत्र दोष इत्यत्राह परिवित्तीति । पूर्व्वार्द्धमतिरोहितार्थम् । तयोर्नरकगमनस्य ध्रुवत्वमुपपादयन्नाह अचीर्णप्रायश्चित्ताविति । कृतप्रायश्चित्तावपि तौ पादोनं नरकफलं भजेते इति तयोर्नरकगमनं ध्रुवमित्यर्थः । न च प्रायश्चित्ते कृते तेनैव पापनाशात् कथं पादोनफलभागितेति वाच्यम् । अनन्यगतेर्वचनात् । तदुक्तम् । किमिव हि वचनं न कुर्य्यान्नास्ति

* परिविन्तिः परिवेत्ता च, इति पाठान्तरम् ।

† अपि चीर्णप्रायश्चित्तौ, इति क ग पुस्तके पाठः ।

देशान्तरस्थक्लीवैकवृषणानसहोदरान् ।
वेश्यातिसक्तपतितशूद्रतुल्यातिरोगिणः ॥ ४ ॥
जड़मूकान्धवधिरकुब्जवामनकुण्ठकान् ।
अतिवृद्धानभार्य्यांश्च कृषिसक्तान्नृपस्य च ॥ ५ ॥
धनवृद्धिप्रसक्तांश्च कामतः कारिणस्तथा ।
कुलटोन्मत्तचौरांश्च परिविन्दन्न दुष्यति ॥ ६ ॥

---

परिशिष्टप्रकाशः ।

यादृशे ज्येष्ठे परिविदनदोषो नास्ति तमाह—

क्लीवः षड्विधः । तथाच देवलः—

"षण्ढको वातजः षण्ढः पण्डः क्लीवो नपुंसकम् ।
कीलकश्चेति षड्धाऽयं क्लीवभेदो विभाषितः ॥

---

प्रभा ।

वचनस्यातिताार इति । केचित्तु अचीर्णप्रायश्चित्ताविति पठित्वा अकृतप्रायश्चित्तौ तौ इतरोपपातकापेक्षया पादोननरकफलस्य भागिनौ ।

"परिवित्तिताऽनुजेन परिवेदनमेव च" ।

इति मनुना उपपातके तदुभयोः पाठात्तदपेक्षयैव पादोनत्वस्य वर्णयितुमुचितत्वादित्याहुः । अपि चीर्णप्रायश्चित्ताविति पाठस्यैव सर्व्वत्र मूलपुस्तकेषु दृष्टत्वात् स एव पाठो व्याख्यातोऽस्माभिः ॥ ३ ॥

यादृशेषु अग्रजेष्वकृतविवाहेष्वकृताग्न्याधानेषु चानुजस्य

परिशिष्टप्रकाशः ।

येषां स्त्रीतुल्यवाक्चेष्टः स्त्रीधर्म्मा षण्ढको भवेत् ।
पुमान् कृत्वा स्वलिङ्गानि पश्चाद्भिन्द्यात्तथैवच ॥
स्त्री च पुंभावमास्थाय पुरुषाचारवद्गुणा ।
वातजो नाम षण्डः स्यात् स्त्रीषण्डो वापि नामतः ॥
असक्लिङ्गोऽथ षण्डः स्यात्षण्डस्तु म्लानमेहनः ।
अमेध्याशी पुमान् क्लीवो नष्टरेता नपुंसकम् ॥
सकीलक इति प्रोक्तोयः क्लैव्यादात्मनः स्त्रियम् ।
अन्येन सह संयोज्य पश्चात्तामेव सेवते" ॥

पुमान् कृत्वेत्यादेरयमर्थः । यः पुमान् लिङ्गान्तराणि कृत्वा स्वलिङ्गं भिन्द्यात्, स वातजोनाम षण्डः इति संबन्धः । अनेन दाक्षिणात्यप्रसिद्धं विद्दप्रजननत्वमुक्तम् । तथा, या स्त्री गृहीत-पुरुषचिह्ना स्त्र्यन्तरमभिगच्छति, सोऽपि वातजोनाम षण्डः । तथा स एव स्त्रीषण्डनामापि । तथा, असक्लिङ्गोऽपि वातजः षण्डः स्यादिति संबन्धः । एतेन त्रिप्रकारो वातजः षण्ड इत्युक्तम् । म्लानमेहनोनिर्विकारलिङ्गः । अमेध्याशी मुखेभगः । यस्यात्मनः स्त्रियं परेणोपभुज्यमानां सोन्मादस्तामेव सेवते, स कीलक इति ।

---

प्रभा ।

विवाहाग्न्याधानकरणे न परिवेदनदोषस्तानाह देशान्तरस्थेति त्रिभिः । देशान्तरस्थादीन् ज्येष्ठान्, परिविन्दन् न दुष्यतीत्य-ग्रिमेण संबन्धः । देशान्तरमाह वृद्धमनुः—

परिशिष्टप्रकाशः ।

एकवृषणान् एकस्यामेव स्त्रियां रतिसक्तान् । असहोदराः वैमात्रेयाः । एकमातृजाता अपि भिन्नपितृकाः न सहोदराः । अतएव भीमस्य हिडिम्बापरिणयने न परिवेदनदोष इति मनुवृत्तिकारः । शूद्रतुल्योदास्यादिवृत्तिः । अतएव,—

"गोरक्षकान् वाणिजकान् तथा कारुकुशीलवान् ।
प्रेष्यान् वार्द्धुषिकांश्चैव विप्रान् शूद्रवदाचरेत्" ॥

इति मनुः । कुण्ठः काणः । सर्व्वक्रियासु अलस इत्यपरे । अभार्य्याः शास्त्रनिषिद्धभार्य्यासम्बन्धाः नैष्ठिकब्रह्मचारिवानप्रस्थभिक्षवः । नृपस्य च सक्तानिति सम्बन्धः । कामतः कारिणीयथेष्टाचरणशीलाः । कुलान्यटन्ति,—इति कुलटाः परकुलाटनशीला इति यावत् । उन्मत्तपौरानितिपाठे पौरः प्रेष्यादिभावेन पुरवासी । कैरानिति पाठे कैरो विषमशीलः । शेषं सुगमम् । एतान् परिविन्दन् एतेषु अकृतदाराग्निसंयोगेषु दाराग्निसंयोगं कुर्व्वन् । न दोषभाक् भवतीति ॥ ६ ॥

---

प्रभा ।

"महानद्यन्तरं यत्र गिरिर्वा व्यवधायकः ।
वाचो यत्र विभिद्यन्ते तद्देशान्तरमुच्यते ॥
देशनामनदीभेदान्निकटोपि भवेत्तु यत् ।
तत्तु देशान्तरं प्रोक्तं स्वयमेव स्वयम्भुवा ॥
दशरात्रेण वा वार्त्ता यत्र न श्रूयतेऽथवा" ।

प्रभा।

क्लीवमाह कात्यायनः—

"न मूत्रं फेनिलं यस्य विष्ठा चाप्सु निमज्जति।
मेढ्रं चोन्मादशुक्राभ्यां हीनं क्लीवः स उच्यते"॥

तत्र देवलेन षड्विधा नारदेन च चतुर्दशविधाः क्लीवभेदा अभिहिताः, ग्रन्थगौरवभयान्नेह प्रदर्शिताः। एकवृषण एकाण्डः पण्डविशेष इति रत्नाकरः। रोगग्रस्तवृषल इति चतुर्वर्गचिन्तामणिः। एकस्यामेव स्त्रियां रतिशक्त इति परिशिष्टप्रकाशः। असहोदराः सहोदरभिन्नाः। एकमातृजाता अपि भिन्नपितृका न सहोदराः। अतएव भीमस्य हिड़िम्बाविवाहे न परिवेदनदोष इति मनुवृत्तिः। वेश्यातिसक्तो वेश्यायामतिशयेन सक्तः। पतितो महापातकादिना। शूद्रतुल्यमाह चतुर्व्वर्गचिन्तामणौ देवलः—

"अनुपासितसन्ध्या ये नित्यमस्नातभोजनाः।
नष्टशौचाः पतन्त्येते शूद्रतुल्याश्च धर्म्मतः"॥

अतिरोगी अप्रतिसमाधेयरोगयुक्तः। जड़ो विकलान्तःकरणः हिताहितावधारणाक्षम इति मिताक्षरा। जड़ोऽक्षमः कार्य्येष्वप्रवृत्त इति माधवाचार्य्याः। अप्राप्तार्थत्वेऽपि फलतो न विशेषः। मूको वर्णोच्चारणासमर्थः। अन्धबधिरौ प्रसिद्धौ। कुब्जः पृष्ठभागे मांसादिविशेषेणात्यन्तविकृतदेहः। वामनो ह्रस्वः। खोड़कोभग्नचरणद्वय इति हेमाद्रिः। कुण्ठकानिति पाठे कुण्ठो-

प्रभा ।

ऽकर्म्मण्यः । कुण्ठोऽकर्म्मण्यमूर्खयोरिति मेदिन्युक्तेः । काण इति परिशिष्टप्रकाशः । सर्व्वक्रियालस इति शूलपाणिरघुनन्दनौ । कुण्ठो मन्दः क्रियासु यः इति, मूढ़ालापटुनिर्भाग्या इति चामरोक्तेः । क्रियास्वपटुरिति वाऽर्थः । अभार्य्याः शास्त्रनिषिद्ध-भार्य्यासंबन्धाः नैष्ठिकब्रह्मचारिवाणप्रस्थसंन्यासाश्रमिणः । नृप-स्येति शेषिकी षष्ठी । चकारेण सक्तानित्यवगम्यते । धन-वृद्धिप्रसक्ताः धनवृद्धौ प्रकर्षेण सक्ताः । कामतोऽकारिणः स्वेच्छयैव नित्यं विवाहमकुर्व्वाणा इति हेमाद्रिः । स्वेच्छयैव विवाहान्निवृत्ता इति माधवाचार्य्यः । नारायणोपाध्यायशूल-पाणिरघुनन्दनैस्तु कामतः कारिण इति पठितम् । कामतः कारिणो यथेष्टाचरणशीला इति नारायणोपाध्यायाः । श्रौत-स्मार्त्तनिरपेक्षस्वच्छन्दव्यवहारिण इति शूलपाणिरघुनन्दनौ । कुहकः परवञ्चनाय वृथोद्योगपर इति हेमाद्रिः । आचार-माधवीयेऽपि तथैव पाठः । नारायणोपाध्यायेन तु कुलट इति पठितं परकुलाटनशील इति व्याख्यातञ्च । स च दत्तक इति रघुनन्दनः । चौरानित्यत्र पौरानिति पाठे प्रेष्यादिभावेन पुरनिवासी पुरप्रेष्यो वेत्यर्थः । केरान् इति पाठे केरो विषम-शीलः । स्पष्टमन्यत् । परिविन्दन्नित्यत्र परेर्लक्षणार्थत्वात् सर्व्वत्र द्वितीया । तथाच एतान् लक्षीकृत्य विन्दन् एतेषु अग्रजेषु अकृत-दाराग्निहोत्रसंयोगेषु दाराग्निहोत्रसंयोगं कुर्व्वन् न दोषभाग् भवतीत्यर्थः ॥ ६ ॥

धनवार्द्धुषिकं राजसेवकं कर्षकं तथा।
प्रोषितञ्च प्रतीक्षेत वर्षत्रयमपि त्वरन्॥ ७॥

परिशिष्टप्रकाशः।

वार्द्धुषिकादयश्चत्वारोऽग्रजाः समावर्त्तनानन्तरं दाराग्निपरिग्रहे त्वरया युक्तेनापि वर्षत्रयं प्रतीक्षणीयाः। ततश्च यत्पूर्व्वश्लोके एतान् परिविन्दन्न दुष्यतीत्युक्तं, तद्वर्षत्रयादूर्द्ध्वमिति बोद्धव्यम्॥ ७॥

प्रभा।

तत्रापि कञ्चिद्विशेषमाह धनवार्द्धुषिकमिति। धनवार्द्धुषिकं राजसेवकं कृषिसक्तं देशान्तरगतञ्चाग्रजं दाराग्निहोत्रसंयोगे त्वरावानपि कनिष्ठो वर्षत्रयं प्रतीक्षेत। एतान् परिविन्दन् न दुष्यतीति यदुक्तं तद्वर्षत्रयादूर्द्ध्वमित्यनेन विशेषितम्। धनस्य वार्द्धुषिको धनवार्द्धुषिकः। संबन्धलक्षणा षष्ठी। वार्द्धुषिकश्च,—

"समर्घं धनमुद्धृत्य महार्घं यः प्रयच्छति।
स वै वार्द्धुषिको नाम ब्रह्मवादिषु गर्हितः"॥

इति स्मृत्या व्याख्यातः।

"यस्तु निन्देत् परं जीवन् प्रशंसत्यात्मनो गुणान्।
स वै वार्द्धुषिको नाम सर्व्वकर्म्मसु गर्हितः"॥

इति विष्णूक्तवार्द्धुषिकान्तरव्यवच्छेदार्थं धनवार्द्धुषिकमित्युक्तम्। वर्षत्रयमपि त्वरन्निति कुर्व्वता त्वराया अभावे अधिककालप्रतीक्षणं सूचितम्। तच्च स्मृत्यन्तरादवगन्तव्यम्॥ ७॥

प्रोषितं यद्यशृण्वानमब्दादिति* समाचरेत् ।
आगते च पुनस्तस्मिन् पादं तच्छुद्धये चरेत् ॥ ८ ॥

परिशिष्टप्रकाशः ।

प्रोषिते विशेषमाह । प्रोषितमशृण्वानम् । प्रत्ययव्यत्ययेनाश्रूयमाणमित्यर्थः । यद्यब्दादूर्द्धमिति समाचरेत् परिविन्देत्, तदाऽऽगते तस्मिन् तच्छुद्धार्थं परिविदनप्रायश्चित्तस्य पादं कुर्य्यात् । अब्दादूर्द्धन्त्वनागमने दोषाभावएव । त्र्यब्दप्रतीक्षा तु श्रूयमाणविषया । तत्रागतेपि दोषाभाव इति ॥ ८ ॥

प्रभा ।

प्रोषिते विशेषान्तरमाह प्रोषितमिति । अशृण्वानं प्रत्ययव्यत्ययेनाश्रूयमाणमित्यर्थः । अशृण्वान इति रत्नाकरसम्मतः पाठः । प्रोषितस्याग्रजस्य वार्त्ताश्रवणाभावे यद्यब्दादूर्द्धं कनीयान् दाराग्निहोत्रसंयोगं करोति, तदा समागते ज्येष्ठे तत्पापशुद्ध्यर्थं परिविदनप्रायश्चित्तस्य पादं कुर्य्यात् । अनागमने त्वदोष एव । एवञ्च प्रोषितस्य त्र्यब्दप्रतीक्षणं श्रूयमाणविषयमिति पर्य्यवस्यति । अत्र च यद्यब्दादूर्द्धं समाचरेदित्यनुवादलिङ्गाद्विधिरनुमातव्यः । चतुरवत्तं पञ्चावत्तं वा जुहोति इति, यद्युभयं चिकीर्षेद्धौत्रञ्चैव ब्रह्मत्वञ्चेति चैवमादिवत् । यथाहुः—

"लिङ्गादपि विधिर्ज्ञेयो दर्भेषु विकिरो यथा" ।

इष्यते च, यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधायाहुतिमा-

* मब्दादूर्द्धं, इति पाठान्तरम् ।

लक्षणे प्रागगतायास्तु प्रमाणं द्वादशाङ्गुलम्।
तन्मूलसक्ता योदीची तस्या एवं नवोत्तरम् ॥८॥

परिशिष्टप्रकाशः।

प्रागुदक् प्लवणं देशं समं वा परिसमूह्योपलिप्य मध्यतः प्राचीं लेखामुल्लिख्य उदीचीं च संहतां पश्चान्मध्ये प्राचीस्तिस्र उल्लिख्याभ्युक्षेत्। लक्षणावृदेषा सर्व्वत्रेति सूत्रे लक्षणमुक्तं, तल्लेखापरिमाणान्तराभिधानेन स्पष्टीकरोति। या प्रथमा प्रागग्रा लेखा तस्याः परिमाणं द्वादशाङ्गुलं, तन्मूललग्ना योत्तराग्रा तस्या नवाङ्गुलाधिकं द्वादशाङ्गुलमेव प्रमाणम्। एकविंशत्यङ्गुलमित्यर्थः ॥ ८ ॥

प्रभा।

हुतिं हुत्वाऽभिघारयेत् यदि राजन्य ऐन्द्रं यदि वैश्यो वैश्वदेवम्—इति स यदिकादपि वाक्यात् क्रतोर्विधानम् ॥ ८ ॥

प्रागुदक्प्रवणं देशं समं वा परिसमूह्योपलिप्य मध्यतः प्राचीं रेखामुल्लिख्योदीचीं च संहतां पश्चात् मध्ये प्राचीस्तिस्र उल्लिख्याभ्युक्षेत् लक्षणावृदेषा सर्व्वत्रेत्यनेनाधानप्रसङ्गेन गोभिलेन लक्षणमुक्तम्। तत् स्पष्टीकरोति लक्षणे इति द्वाभ्याम्। लक्षणे येयं प्रथमा प्राग्गता रेखा तस्याः प्रमाणं द्वादशाङ्गुलम्। तन्मूललग्ना या उदग्गता रेखा तस्या नवोत्तरं नवाङ्गुलाधिकं एवं द्वादशाङ्गुलं प्रमाणं, एकविंशत्यङ्गुलमित्यर्थः ॥ ८ ॥

उदग्गतायाः संलग्नाः शेषाः प्रादेशमात्रिकाः ।
सप्तसप्ताङ्गुलास्त्यक्त्वा कुशेनैव समुल्लिखेत्॥ १० ॥

परिशिष्टप्रकाशः ।

उक्तयोरवशिष्टा यास्तिस्रः उक्तास्ता उदीच्यां रेखायां संलग्नाः सप्तसप्ताङ्गुलान्तराः प्रादेशप्रमाणाः कुशेनैव समुल्लिखेदिति। कुशेनेति सर्व्वाभिः संबध्यते ॥ १० ॥

प्रभा ।

उदग्गताया इति । शेषा अवशिष्टास्तिस्रो रेखा उदग्गतायाः संलग्नाः प्रादेशपरिमाणाः सप्तसप्ताङ्गुलान्तरालाः कुशेनैव समुल्लिखेत् । कुशेनैवेत्यादि सर्व्वाभिः रेखाभिः संबध्यन्ते। सर्व्वासां रेखानामुल्लेखनं कुशेनैव कार्य्यमित्यर्थः । अयन्तावदेकः प्रकारः । प्रकारान्तरमुक्तं गोभिलपुत्रेण गृह्यासंग्रहे । तद्यथा—

"लक्षणं तत् प्रवक्ष्यामि प्रमाणं दैवतञ्च यत्" ।

इत्यभिधायानतिदूरे,—

"प्राक्कृता पार्थिवी ज्ञेया आग्नेयी चाप्युदक् स्मृता ।
प्राजापत्या च ऐन्द्री च सौमी च प्राक् कृता स्मृता" ॥

इति ।

"पार्थिवी चैव सौमी च रेखे द्वे द्वादशाङ्गुले ।
एकविंशतिराग्नेयी प्रादेशिन्ये उभे स्मृते ॥
षडङ्गुलान्तराः कार्य्या आग्नेयीसंहितास्तु ताः ।
पार्थिवायास्तु रेखायास्तिस्रस्ता उत्तरोत्तराः" ॥

मानक्रियायामुक्तायामनुक्ते मानकर्त्तरि।
मानकृद्यजमानः स्याद्विदुषामेष निश्चयः॥ ११॥
पुण्यमेवादधीताग्निं स हि सर्व्वैः प्रशस्यते।
अनर्द्धुकत्वं यत्तस्य काम्यैस्तत् नीयते शमम्॥ १२॥

---

परिशिष्टप्रकाशः।

मानपरिभाषामाह—

निगदव्याख्यातम्। ततश्चाङ्गुलादिमानं यजमानाङ्गुलेनेति सिद्धम्॥ ११॥

वैश्यकुलाद्वा अम्बरीषाद्वेत्यादिसूत्रेणाग्नियोनयो बहव उक्ताः।

---

प्रभा।

इति। अन्ते च,—

"एष लेखविधिः प्रोक्तो गृह्याकर्म्मसु सर्व्वसु।
सूक्ष्मास्ताश्चजवः कार्य्या रेखास्ताः सुसमाहिताः॥
एतानि तत्त्वतो ज्ञात्वा गृह्याकर्म्माणि कारयेत्"॥

इति च। तदनयोः प्रकारयोर्विकल्पः। द्वयोरेव स्वशास्त्रोक्तत्वात्॥ १०॥

अङ्गुलिमानादिकं कस्य ग्रहीतव्यमित्यपेक्षायां मानपरिभाषामाह मानक्रियायामिति। मानमेव क्रिया मानक्रिया। सा यत्रोक्ता मानकर्त्ता तु नोक्तः, तत्र यजमानो मानकर्त्ता स्यादित्येष विदुषां निर्णयः॥ ११॥

पुण्यमेवेति। गोभिलेन वैश्यकुलादयो बहवोऽग्नियोनय-

परिशिष्टप्रकाशः ।

तथा, अपि वाऽरणिं मथित्वाऽभ्यादध्यात् । पुण्यस्त्वेवानर्द्धुको भवतीति सूत्रेणारणेयः पुण्य इत्युक्तम् । ततस्तमेवादध्यात् । हि यस्मात्स आरणेयः सर्व्वैः प्रशस्यते । पुण्यातिशयहेतुत्वात् । अन्वाहितेऽग्नौ * निर्व्वाणे पुनराधानयोनेः स्वाधीनत्वाच्च । यैव हि प्रथमाधाने योनिः सैव पुनराधानेऽपि । वैश्यकुलादीनां तु योनित्वे न स्वाधीनतेति न प्राशस्त्यं तेषाम् । तथा गृह्यान्तरम् । पूर्व्वैवानुगतेऽग्नौ योनिः । स्वयं च वक्ष्यति,—

"पूर्व्वैव योनिः पूर्व्वावृत् पुनराधानकर्म्मणि" ।

इति । नन्वसावपि ऋद्धिसाधनत्र भवति, अनर्द्धुको भवतीत्युक्तेः । वैश्यकुलाद्याहृतस्तु ऋद्धिसाधनम् । अतः स एव प्रशस्तो नेतरः । तथाच गृह्यान्तरम् । ब्राह्मणकुलाद्ब्रह्मवर्चसकामोऽग्निमाहृत्यादधीत राजन्यादोजोवीर्य्यकामो वैश्यात्पुत्रपशुकामोऽम्बरीषाद्धनधान्यकामस्त्वारणेयं पुण्यकोषकाम इति । तत्राह । अनर्द्धुकत्वं यत्तस्यारणेयस्य तत्काम्यैः कर्म्मभिर्ब्रह्मवर्चसादिसाधनैस्तदाधारैः† शान्तिं नीयते कर्म्मद्वारा ऋद्धिसाधनत्वात् । अत्र चाधानं लक्षणपूर्व्वकं समन्त्रकमग्निस्थापनम् । न त्वरणिनिर्मन्थनम् । वैश्यकुलाद्याहृते तदसम्भवात् । आङ्पूर्व्वस्य दधातेस्थारोपणवाचित्वात् ॥ १२ ॥

---

* अनुगतेऽग्नौ, इति क पुस्तके पाठः ।

† आरणेयाग्निनिष्पन्नहोमैः, इति ख ग पुस्तकयोः पाठः ।

यस्य दत्ता भवेत्कन्या वाचा सत्येन केनचित्।
सोऽन्त्यां समिधमाधास्यन्नादधीतैव नान्यथा॥ १२॥

परिशिष्टप्रकाशः।

ब्रह्मचारी वेदमधीत्यान्त्यां समिधमभ्याधास्यन् इत्यनेन सूत्रेण सायं प्रातर्विहितसमिदाधानेन ब्रह्मचारिणा अन्त्या पश्चिमा समिद्ब्रह्मचर्य्यसमाप्तिसमये यस्मिन्नग्नावाधातव्या तमादध्यादित्युक्तम्। तत्र विशेषमाह,—

प्रभा।

उक्ताः। अपि वाऽन्यं मथित्वाऽभ्यादध्यात् पुण्यस्त्वेवानर्द्धुकोभवतीत्यारणेयस्य पुण्यत्वमुक्तम्। तत्रोच्यते। पुण्यमेवाग्निमादधीत। यस्मात् स सर्व्वैः प्रशस्यते। पुण्यातिशयहेतुत्वात्। तथाच स्मृत्यान्तरम्। आरणेयमुरुपुण्यकोषकाम इति। देवाच पुनराधाने कर्त्तव्ये पूर्व्ववाग्नियोनिराश्रयितव्या भवतीति वक्ष्यते। तत्र स्वाधीनेयमग्नियोनिरिति प्रशस्ता। अन्यासान्तु वैश्यकुलादीनामग्नियोनीनां पराधीनत्वादप्राशस्त्यम्। यत्तु अनर्द्धुक इत्यनेनारणेयस्य ऋद्धिजनकत्वं नास्तीत्युक्तम्, तत्तु तत्र कृतैः काम्यैर्होमैः शमं नीयते। एतदुक्तं भवति। सत्यमारणेयस्याधानमृद्धिं न जनयति, किन्त्वाहिते आरणेयेऽग्नौ ऋद्धिकामनया कृतैर्होमैः ऋद्धिरपि तदाधातुर्भवत्येवेति॥ १२॥

ब्रह्मचारी वेदमधीत्यान्त्यां समिधमभ्याधास्यन्नित्यादिना

अनूढैव तु सा कन्या पञ्चत्वं यदि गच्छति ।
न तथा व्रतलोपोऽस्य तेनैवान्यां समुद्वहेत् ॥ १४ ॥

---

परिशिष्टप्रकाशः ।

यस्य केनचित्कन्यादात्रा सत्येन वाचा कन्या दत्ता भवेत्, स एवान्त्यसमिदाधानं करिष्यन्नादधीत नान्यथेति ॥ १३ ॥

सा यद्यकृतपाणिग्रहणैव विनाशं याति, तथा सत्यस्य गृहीताग्नेराहिताग्निताव्रतस्य वाग्दत्ताया अदाहे न लोपः । किं तर्हि तेनैवाग्निना अन्यां समुद्वहेत् ॥ १४ ॥

---

। प्रभा ।

ब्रह्मचर्य्यपरिसमाप्तिसमयेऽन्त्यसमिदाधानार्थमग्न्याधानं गोभिलेनोक्तम् । तत्र विशेषमाह यस्येति । यस्येति संबन्धलक्षणा षष्ठी । केनचित् कन्यादात्रा यस्मै कन्या सत्येन वाचा दत्ता भवेत्, स एव अन्त्यां समिधमाधास्यन्नग्निमादधीत । नान्यथा न तथाविधवाग्दानाभावे । तथात्वे समावर्त्तनात् परं झटिति कन्याया अलाभे कञ्चित् कालमनाश्रमी स्यादिति भावः ॥ १३ ॥

अनूढैवेति । यद्यकृतविवाहैव सा कन्या म्रियते, तथा सत्यस्याहिताग्नेर्व्रतलोपो न भवति । तेनैवाग्निनाऽन्यां कन्यामुद्वहेत् । एतेनाहितेनाग्निना वाग्दत्ताया दाहो न कर्त्तव्य इत्युक्तं भवति । तथा करणे ह्याहिताग्निताव्रतमस्य लुप्येत । तेनैवान्यां समुद्वहेदिति चानुपपन्नं स्यात् ॥ १४ ॥

अथ चेन्न लभेतान्यां याचमानोऽपि कन्यकाम्।
तमग्निमात्मसात् कृत्वा क्षिप्रं स्यादुत्तराश्रमी ॥ १५ ॥

षष्ठः खण्डः।

---

परिशिष्टप्रकाशः।

यदि चान्यां कन्यां प्रार्थयन्नपि न प्राप्नोति। अनेन ब्राह्म-दैवादिविवाहव्यतिरेकेण याच्ञापूर्व्वकाप्रशस्तविवाहेनापि गार्हस्थ्याय यतनीयमित्युक्तम्। तदाऽऽहिताग्निः प्राजापत्येष्टिं कृत्वा तमग्निमात्मन्यारोप्य शीघ्रं चतुर्थाश्रमी स्यादिति ॥ १५ ॥

---

प्रभा।

अथ चेदिति। यदि प्रार्थयमानोऽप्यन्यां कन्यां न लभते; तदा तमाहितमग्निमात्मसात् कृत्वा प्राजापत्येष्टिविधिना आत्मनि समारोप्याविलम्बेन चतुर्थाश्रमी भवेत्। याचमानोऽपीत्यनेन ब्राह्मादिप्रशस्तविवाहासम्भवे याच्ञापूर्व्वकाप्रशस्तविवाहेनापि गृहस्थाश्रमप्रवेशाय यतितव्यमित्युक्तम् ॥ १५ ॥

इति षष्ठः खण्डः।

## सप्तमः खण्डः ।

अश्वत्थो यः शमीगर्भः प्रशस्तोर्वीसमुद्भवः ।
तस्य या प्राङ्मुखी शाखा योदीची योर्द्ध्वगाऽपि वा ॥१॥
अरणिस्तन्मयी प्रोक्ता तन्मयी चोत्तरारणिः ।
सारवद्दारवं चात्रमोविली* च प्रशस्यते ॥ २ ॥

---

### परिशिष्टप्रकाशः ।

आरणेयस्य मथनेतिकर्त्तव्यतामाह—

मेध्यभूमौ यः शमीगर्भोऽश्वत्थोजातः, तस्य या प्रागग्रा उत्तराग्रा ऊर्द्ध्वगा वा शाखा, तन्मयी अरणिरुत्तरारणिश्च शास्त्रोक्ता । सारयुक्तखदिरादिदारुभवं मन्थनदण्डरूपं चात्रं चात्रोर्द्ध्वयन्त्रणार्थंकाष्ठरूपा ओविली च प्रशस्ता भवतीति ॥१॥२॥

---

### प्रभा ।

आरणेयस्य मन्थनप्रकारं वक्तुं प्रथमं मन्थनयन्त्रघटकमरण्यादिकमाह अश्वत्थोय इति द्वाभ्याम् । शमीगर्भस्य लक्षणं वक्ष्यते । पवित्रभूमौ जातो यः शमीगर्भोऽश्वत्थः, तस्य प्राङ्मुखी उदक्गता ऊर्द्ध्वगता वा या शाखा, अधरारणिरुत्तरारणिश्च तन्मयी

---

* मौविली, इति पाठान्तरम् । एवं परत्र ।

संसक्तमूलो यः शम्या शमीगर्भः स उच्यते।
अलाभे त्वशमीगर्भादाहरेदविलम्बितः॥ ३॥
चतुर्विंशतिरङ्गुष्ठा दैर्घ्यं षडपि पार्थवम्।
चत्वार उच्छ्रयोमानमरण्योः परिकीर्त्तितम्॥४॥

---

परिशिष्टप्रकाशः।

शमीगर्भं व्याकरोति। शम्या सह मूलं यस्य सम्यक् लग्न-मेकीभूतं, स शमीगर्भोऽभिधीयते। तदलाभे अश्वत्थान्तरादपि विलम्बरहितोऽरण्याहरणं कुर्य्यात्॥ ३॥

अरणिद्वयपरिमाणमाह—

षडङ्गुष्ठाः पार्थवं पृथुत्वं प्रस्तार इति यावत्। उच्छ्राय-

---

प्रभा।

मुनिभिः कथिता। चात्रमोविली च सारयुक्तखदिरादिकाष्ठ-निर्मितं मुनिभिः प्रशस्यते। चात्रं नाम मन्थनदण्डं, चात्रोर्द्ध्वभाग-नियन्त्रणार्थः काष्ठविशेष ओविली॥ १॥ २॥

इदानीं शमीगर्भस्य लक्षणमाह संसक्तमूल इति। यस्याश्व-त्थस्य मूलं शम्या सह संसक्तं सम्यग् लग्नं, सोऽश्वत्थः शमीगर्भः कथ्यते। शमीगर्भस्याश्वत्थस्यालाभे पुनरशमीगर्भादप्यरणिमाहरेत्। गुणलोपे च मुख्यस्येति न्यायादित्यभिप्रायः। शमीगर्भस्यान्वेषणया कालविलम्बो न कर्त्तव्य इति वक्तुमविलम्बित इत्युक्तम्॥ ३॥

अरण्यादीनां परिमाणमाह चतुर्विंशतिरिति द्वाभ्याम्। चतुर्विंशतिसंख्याका अङ्गुष्ठा अङ्गुष्ठाङ्गुला अरण्योर्दैर्घ्यं दीर्घता-

**अष्टाङ्गुलः प्रमन्थः स्याच्चात्रं स्याद् द्वादशाङ्गुलम्।**
**ओविली द्वादशैव स्यादेतन्मन्थनयन्त्रकम्॥ ५॥**

---

परिशिष्टप्रकाशः।

उच्चता चत्वारोऽङ्गुष्ठाः। अरण्योरितप्रमाणं कार्त्स्न्येन कथितम्। शेषं सुगमम्॥ ४॥

चात्रगर्भस्थो मन्थनार्थः काष्ठविशेषः प्रमन्थः, सोऽष्टाङ्गुलः स्यात्। एतदरण्यादिचतुष्टयं मन्थनार्थं यन्त्रकं यन्त्र इत्यर्थः। शेषं निगदव्याख्यातम्॥ ५॥

---

प्रभा।

परिमाणमित्यर्थः। षडङ्गुलास्तयोः पार्थवं पृथुत्वं, तत्परिमाणमिति यावत्। चत्वारोऽङ्गुला अरण्योरुच्छ्रय उच्चतापरिमाणमित्येतत्। तदेवमरण्योः परिमाणं सर्व्वतोभावेन कथितम्॥ ४॥

अष्टाङ्गुल इति। चात्रमध्यस्थो मन्थनार्थः काष्ठविशेषः प्रमन्थ-इत्युच्यते। स खल्वष्टाङ्गुलपरिमाणः स्यात्। चात्रमोविली च द्वादशाङ्गुलपरिमाणं स्यात्। एतत् सर्व्वं मिलितं यथाविन्यस्तं मन्थनयन्त्रं इति कथ्यते। मन्थनयन्त्रकमिति स्वार्थे कन्। गोभिलपुत्रेणाप्येवमेव मन्थनयन्त्रमुक्तम्। केवलमरण्योर्दीर्घतायां अन्यदपि परिमाणद्वयमुक्तम्। तथाच गृह्यासंग्रहः—

"आश्वत्थीन्तु शमीगर्भामरणीं कुर्व्वीत सोत्तराम्।
उरुदीर्घां रत्निदीर्घां चतुर्विंशाङ्गुलां तथा"॥

इति। खादिरे बध्नाति पालाशे बध्नाति रोहितके बध्नातीति वदमीषां विकल्पो बोद्धव्यः॥ ५॥

अङ्गुष्ठाङ्गुलिमानं तु यत्र यत्रोपदिश्यते।
तत्र तत्र वृहत्पर्व्वग्रन्थिभिर्मिनुयात्सदा ॥ ६ ॥
गोवालैः शणसंमिश्रैस्त्रिवृद्वृत्तमनंशुकम्।
व्यामप्रमाणं नेत्रं स्यात्प्रमथ्यस्तेन पावकः ॥ ७ ॥

परिशिष्टप्रकाशः।

यत्र यत्र अङ्गुष्ठमानमेतावदङ्गुलिमानमेतत्कर्त्तव्यमुच्यते, तत्र सर्व्वत्राङ्गुष्ठस्य यद्ग्रन्थिस्थानं मध्यस्थितं तेन मानं सर्व्वदा कुर्य्यात् ॥ ६ ॥

शणसंमिश्रगोवालैस्त्रिगुणं वर्त्तुलं अंशुकरहितं विस्तृतस्वहस्तद्वय*तिर्य्यगन्तरमानं नेत्रं रज्जुर्भवेत्। तेन नेत्रेणाग्निर्मन्थनीयः ॥ ७ ॥

प्रभा।

अङ्गुष्ठेति। वृहत्पर्व्वग्रन्थिभिः मध्यरेखाभिः। निगदव्याख्यातमन्यत् ॥ ६ ॥

मन्थनसाधनं नेत्रमाह गोवालैरिति। शणसंमिश्रैर्गोवालैर्नेत्रं स्यादिति संबन्धः। नेत्रं रज्जुः। नेत्रं विशिनष्टि त्रिवृदित्यादिना। त्रिवृत् त्रिगुणं, वृत्तं वर्त्तुलं, अनंशुकं अंशुरहितम्। अंशवस्तन्तूनां क्षुद्रा अवयवाः। व्यामप्रमाणं विस्तृतसहस्तबाहुद्वयतिर्य्यगन्तरालं व्याम इत्युच्यते। तत्परिमाणम्। तेन नेत्रेण प्रकर्षेणाग्निर्मन्थनीयः ॥ ७ ॥

* स्वहस्तबाहुद्वय, इति ख पुस्तके पाठः।

मूर्द्धाक्षिकर्णवक्त्राणि कन्धरा चापि पञ्चमी ।
अङ्गुष्ठमात्राण्येतानि द्व्यङ्गुलं वक्ष उच्यते ॥ ८ ॥
अङ्गुष्ठमात्रं हृदयं त्र्यङ्गुष्ठमुदरं स्मृतम् ।
एकाङ्गुष्ठा कटिर्ज्ञेया द्वौ वस्तिर्द्वौ तु गुह्यकम् ॥ ९ ॥
ऊरू जङ्घे च पादौ च चतुस्त्र्येकं यथाक्रमम् ।
अरण्यवयवाह्येते याज्ञिकैः परिकीर्त्तिताः ॥ १० ॥

---

परिशिष्टप्रकाशः ।

अरण्यङ्गं तन्मानञ्चाह—

कन्धरा ग्रीवा, वक्षोग्रीवाहृदययोर्मध्यम् । एतच्च मूलादारभ्य मानम् । तुच्छदार्व्वादीनां तथैव मानस्य औत्सर्गिकत्वात् । शेषं निगदव्याख्यातम् ॥ ८ ॥

वस्तिर्नाभेरधोभागः । गुह्यमुपस्थ इति यावत् । शेषं सुगमम् ॥९॥

ऊरुजङ्घापादं यथाक्रमं चतुरङ्गुष्ठत्र्यङ्गुष्ठैकाङ्गुष्ठम् । एतेऽरण्-

---

प्रभा ।

अरण्यवयवं तत्परिमाणञ्चाह मूर्द्धाक्षीति त्रिभिः । वक्त्रं मुखम् । कन्धरा ग्रीवा । ग्रीवाहृदययोर्मध्यं वक्षः । सुगममन्यत् । एतच्च मूलादारभ्य मानं, तुच्छदार्व्वादीनां तथैव मानस्यौत्सर्गिकत्वादिति नारायणोपाध्यायाः ॥ ८ ॥

अङ्गुष्ठमात्रमिति । द्वौ अङ्गुष्ठौ । एवमुत्तरत्र । वस्तिर्नाभेरधोभागः । स्पष्टमन्यत् ॥ ९ ॥

ऊरू जङ्घे चेति । ऊरू जङ्घे पादौ चेत्येतानि यथाक्रमं

यतद्गुह्यमिति प्रोक्तं देवयोनिस्तु सोच्यते।
तस्यां योजायते वह्निः स कल्याणकृदुच्यते ॥११॥

परिशिष्टप्रकाशः।

वयवायज्ञव्यवहारिभिः कार्त्स्न्येनोक्ता इति चतुर्विंशतेरङ्गुष्ठानां विभागः। हिशब्दोऽवधारणे ॥ १० ॥

यत्पूर्व्वं द्व्यङ्गुष्ठं गुह्यमित्यभिहितं तद्देवानामुत्पत्तिस्थानम्। अतस्तस्यां योनौ योऽग्निर्जायते सोऽभ्युदयकारी उच्यते। तस्मात्तत्र मन्थनं कार्य्यम्। एतदर्थमेव चाङ्गविभागकथनम् ॥ ११ ॥

प्रभा।

चतुरङ्गुष्ठत्र्यङ्गुष्ठैकाङ्गुष्ठपरिमितानि भवन्ति। सोऽयं चतुर्विंशत्यङ्गुष्ठानां विभागः। एते अरण्यवयवा याज्ञिकैः सर्व्वतोभावेन निश्चयेन कथिताः ॥ १० ॥

मन्थनस्थानमाह यत्तदिति। यत्तदिति सर्व्वनामद्वयेन प्रसिद्धिमवद्योतयति। यद्गुह्यमिति कथितं, सा देवस्याग्नेर्योनिरुत्पत्तिस्थानमुच्यते। सेति विधेयप्राधान्यविवक्षया स्त्रीत्वेन निर्देशः। तस्यां मन्थनेन योऽग्निरुत्पद्यते, स कल्याणकृदभ्युदयकारीति मुनिभिः कथ्यते। गोभिलपुत्रस्त्वाह—

"मूलादष्टाङ्गुलमुत्सृज्य त्रीणि त्रीणि च पार्श्वयोः।
देवयोनिः स विज्ञेयस्तत्र मथ्यो हुताशनः ॥
मूलादष्टाङ्गुलं त्यक्त्वा अग्रात्तु द्वादशाङ्गुलम्।
देवयोनिः स विज्ञेयस्तत्र मथ्यो हुताशनः" ॥

अन्यत्र मथ्यते यत्तु तद्रोगभयमाप्नुयात् *।
प्रथमे मन्थने ह्येष नियमोनोत्तरेषु च ॥ १२ ॥
उत्तरारणिनिष्पन्नः प्रमन्थः सर्वदा भवेत्।
योनिसङ्करदोषेण युज्यते ह्यन्यमन्थकृत् ॥ १३ ॥

---

परिशिष्टप्रकाशः।

यत्पुनरन्यत्र मथ्यते तस्माद्धेतो रोगभयं प्राप्नोति। अयं दोषः प्रथमाग्न्याधानमन्थने द्वितीयादिषु पुनर्नेति ॥ १२ ॥

प्रमन्थोयः पूर्व्वमुक्तः स उत्तरारणेः काष्ठशकलमुद्धृत्य रन्ध्रपूरणार्थं निष्पादितः। सर्व्वदा द्वितीयाधानादिष्वपि भवेत्। अन्यथात्वे दोषमाह। हि यस्मादन्यतः प्रमन्थकारी योनिसङ्करदोषेण पापेन संबध्यते ॥ १३ ॥

---

प्रभा।

इति। तत्र प्रथमवचनेन गुह्यस्य देवयोनित्वं भङ्ग्यन्तरेणोक्तम्। द्वितीयवचनेन तु तत्सन्धेरिति विशेषः। सोऽयं विकल्पः ॥ ११ ॥

अन्यत्रेति। यदिति मन्थनक्रियाविशेषणम्। यत् पुनर्देवयोनेरन्यत्र मथ्यते, तस्माद्धेतो रोगभयं प्राप्नोति मन्थनकर्त्ता। अयञ्च नियमः प्रथमाधाने यन्मन्थनं क्रियते तत्रैव, न पुनराधाने कर्त्तव्ये द्वितीयादिमन्थनेषु ॥ १२ ॥

इदानीं प्रमन्थनिर्माणे विशेषमाह उत्तरारणीति। उत्तरा-

---

* अन्येषु ये तु मथ्नन्ति ते रोगभयमाप्नुयुः, इति पाठान्तरम्।

आर्द्रा सशुषिरा चैव घुणाङ्गी स्फुटिता तथा।
न हिता यजमानानामरणिर्न्नोत्तरारणिः॥ १४॥

सप्तमः खण्डः।

---

परिशिष्टप्रकाशः।

सशुषिरा सरन्ध्रा। घुणाङ्गी घुणादिना विशीर्णावयवा। शेषं निगदव्याख्यातम्॥ १४॥

सप्तमः खण्डः।

---

प्रभा।

रवेः सकाशात् काष्ठशकलमुद्धृत्य तेन प्रमन्थो निष्पन्नो भवेत्। सर्व्वदा द्वितीयाद्याधानेष्वपि। अन्येन काष्ठेन प्रमन्थकरणे दोषमाह योनीति। मन्थः प्रमन्थः। यस्मादन्येन काष्ठेन प्रमन्थकर्त्ता योनिसङ्करदोषेण युज्यते, तस्मात् सर्व्वदैवोत्तरारणिनिष्पन्नः प्रमन्थो भवेत् इति पूर्व्वार्द्धोक्तेऽर्थे हेतुवचनमुत्तरार्द्धम्॥ १३॥

अरण्योर्विशेषमाह आर्द्रेति। सशुषिरा सच्छिद्रा। घुणः कीटविशेषः। स अङ्गे यस्याः सा घुणाङ्गी। स्पष्टमन्यत्॥ १४॥

इति सप्तमः खण्डः।

## अष्टमः खण्डः।

परिधायाहतं वासः प्रावृत्य च यथाविधि।
बिभृयात्प्राङ्मुखोयन्त्रमावृता वक्ष्यमाणया॥ १॥

परिशिष्टप्रकाशः।

नववस्त्रं परिधाय उत्तरीयं च कृत्वा पूर्व्वाभिमुखोयन्त्रं चात्तौ-बिल्यादि वक्ष्यमाणपरिपाट्या निष्पीडयेत्। यथाविधीत्यनेन,—

"परिधानाद्वहिः कच्छा निबद्धा ह्यासुरी भवेत्।
धर्म्म्ये कर्म्मणि विद्वद्भिर्व्वर्ज्जनीया प्रयत्नतः"॥

इति योगियाज्ञवल्क्योक्तपरिधानविधिः।

"सव्यादंसात्परिभ्रष्टः कटिदेशे धृताम्बरः।
एकवस्त्रन्तु तं विद्यात् दैवे पित्र्ये च वर्ज्जयेत्"॥

इति शातातपोक्तोत्तरीयधारणविधिश्च विहित इति॥ १॥

प्रभा।

इदानीं मन्थनप्रकारमाह परिधायेति। अहतं यन्त्रनिर्मुक्तं नवमिति यावत्। वासः परिधाय प्रावृत्य च उत्तरीयमपि विधाय। यथाविधीत्युभयत्र संबध्यते। ततश्च परिधाने उत्तरीय-करणे च—

"परिधानाद्वहिः कच्छा निबद्धा ह्यासुरी भवेत्।
धर्म्म्ये कर्म्मणि विद्वद्भिर्व्वर्ज्जनीया प्रयत्नतः"॥

चात्त्रबुध्ने प्रथन्याग्रं गाढ़ं कृत्वा विचक्षणः।
कृत्वोत्तरायामरणिं तद्बुध्नमुपरि न्यसेत् ॥ २ ॥
चात्रोर्द्धकीलकाग्रस्थामोविलीमुदगग्रगाम्।
विष्टभ्य धारयेद्यन्त्रं निष्कम्प्यं प्रयतः शुचिः ॥ ३ ॥

---

परिशिष्टप्रकाशः।

चात्ररन्ध्रे प्रमन्थाग्रं रन्ध्रपूरणेन निश्चलं कृत्वा प्रमथनाभिज्ञ-उत्तराग्रामरणिं कृत्वा तच्चात्रमूर्द्धस्थितमरण्युपरि न्यसेत् ॥ २ ॥

चात्रोर्द्धस्थलोहशङ्कुशिरसि ओविलीमुत्तराग्रामारोप्य गाढ़ं पोड़यित्वा ओविलीनिःपीड़नेन निश्चलं कृत्वा एकचित्तः कृताचमनादिर्द्धारयेत् ॥ ३ ॥

---

प्रभा।

इति।

"सव्यादंसात् परिभ्रष्टः कटिदेशे धृताम्बरः।
एकवस्त्रं तु तं विद्यात् दैवे पित्र्ये च वर्ज्जयेत्" ॥

इति चेवमादिस्मृत्यन्तरोक्तो विधिरनुसरणीय इत्युक्तं भवति। एवम्भूतो भूत्वा प्राङ्मुखः सन् वक्ष्यमाणया परिपाट्या मन्थमयन्त्रं धारयेत् ॥ १ ॥

चात्त्रबुध्ने इति। विचक्षणो मन्थनप्रकाराभिज्ञः चात्रस्य मूले प्रमन्थस्याग्रं रन्ध्रपूरणेन निश्चलं कृत्वा अरणिमुत्तराग्रां कृत्वा दण्डवत् ऊर्द्धस्थितं चात्रं अरणेरुपरि स्थापयेत् ॥ २ ॥

चात्रोर्द्धेति। चात्रस्योर्द्धे यत् कीलकं लौहशङ्कुः तदग्रस्थिता-

त्रिरुद्वेष्ट्याऽथ नेत्रेण चात्रं पत्न्यहृतांशुका ।
पूर्वं मन्थेदरण्यन्ती प्राच्यग्नेः स्याद्यथा च्युतिः ॥ ४ ॥
नैकयाऽपि विना कार्यमाधानं भार्यया द्विजैः ।
अकृतं तद्विजानीयात्सर्वा नान्वारभन्ति यत् ॥ ५ ॥

---

परिशिष्टप्रकाशः ।

पूर्वोक्तगोवालरज्ज्वा चात्रं वारत्रयमुपर्य्युपरिक्रमेण वेष्टयित्वा नववस्त्रा पत्नी प्राच्यान्दिश्यरण्यन्ते मथेत् । यथा प्राग्देशे अग्नेर्निःसरणं भवेत् ॥ ४ ॥

सर्वाः पत्न्यो यदाधानं नेत्राकर्षणेनानुकूलाः सत्यो न निष्पादयन्ति तदकृतं ज्ञातव्यं विगुणत्वात् । शेषं निगदव्याख्यातम् ॥५॥

---

प्रभा ।

मुदगग्रामोविलीं कृत्वा विष्टभ्याश्रित्य गाढं पीड़यित्वा वा यन्त्रं निष्कम्पं सम्पाद्य शुचिः कृताचमनादिः प्रयतः प्रयत्नवान् तद्गतचित्त इति यावत् । यन्त्रं धारयेत् ॥ ३ ॥

त्रिरुद्वेष्ट्येति । अथानन्तरं नेत्रेण पूर्व्वोक्तलक्षणेन चात्रं उपर्य्युपरिक्रमेण वारत्रयं वेष्टयित्वा अहतवसना पत्नी पूर्व्वं अरण्यन्ते मन्थेत् । अरणिपूर्व्वान्ते मन्थनस्य प्रयोजनमाह प्राचीति । अग्नेश्च्युतिर्निःसरणं प्राची प्राक्प्रदेशगता यथा भवेत् तथा मन्थेत् । प्राचि इति सप्तम्यन्तपाठेऽपि तथैवार्थः ॥ ४ ॥

नैकयापीति । यजमानस्य यावत्यो भार्य्याः सन्ति तासा-

वर्णज्यैष्ठ्येन बह्वीभिः सवर्णाभिश्च जन्मतः।
कार्य्यमग्निच्युतेराभिः साध्वीभिर्मन्थनं पृथक्॥६॥
नात्र शूद्रां नियुञ्जीत न द्रोहद्वेषकारिणीम्।
नाशासनस्थां नान्येन पुंसा च सह सङ्गताम्॥७॥

---

परिशिष्टप्रकाशः।

प्रथमं ब्राह्मण्या, तदनु क्षत्रियया इत्येवं यथा वर्णज्यैष्ठम् असवर्णाभिः, सवर्णाभिश्च जन्मज्यैष्ठ्यक्रमेणाग्निनिःसरणं यावन्न भवति तावत्ताभिः पृथङ्मन्थनं कार्य्यम्॥ ६॥

अत्राधाने शूद्रां भार्य्यां न नियुञ्जीत। अशूद्रापि प्राश-

---

प्रभा।

मेकयाऽपि भार्य्यया विना आधानं न कार्य्यं, सर्व्वाभिरेव कार्य्यमित्यर्थः। सर्व्वा यजमानभार्य्या अन्वारम्भं न कुर्व्वन्ति चेत्, तदाधानं कृतमप्यकृतं विजानीयात्। तस्मादेकयापि भार्य्यया विना आधानं न कार्य्यमित्यर्थः। अन्वारम्भो नाम नेत्राकर्षणेन मन्थनानुकूल्यम्॥ ५॥

तत्र विशेषमाह वर्णज्यैष्ठ्येनेति। सवर्णासवर्णबहुस्त्रीसत्त्वे वर्णज्यैष्ठ्येन ताभिर्मन्थनं कार्य्यम्। प्रथमं ब्राह्मण्या तदनु क्षत्रियया तदनु वैश्ययेत्यर्थः। सवर्णबहुस्त्रीसत्त्वे जन्मज्यैष्ठ्यक्रमेण मन्थनं कार्य्यम्। उक्तक्रमेणाभिः साध्वीभिः स्त्रीभिरग्निनिःसरणपर्य्यन्तं पृथङ्मन्थनं कार्य्यम्॥ ६॥

नात्रेति। अत्राग्निमन्थने विवाहितामपि शूद्रां न नियुञ्जीत।

ततः शक्ततमा पश्चादासामन्यतमाऽपि या ।
उपेतानां चान्यतमा मन्थेदग्निं निकामतः ॥ ८ ॥
जातस्य लक्षणं कृत्वा तं प्रणीय समिध्य च ।
आधाय समिधश्चैव ब्रह्माणमुपवेशयेत् ॥ ९ ॥

---

परिशिष्टप्रकाशः ।

विरोधकारिणी द्वेषकारिणी आज्ञाविघातिनी नियोगधर्मेणापि पुरुषान्तरसङ्गता नाधाने नियोज्या । इतरा तु पतितैवेति ॥ ७ ॥

ततः सर्वाभिर्मथने कृते पश्चादासामेव मन्थनकर्त्रीणां या अत्यन्तबलवती उपनीतानां च त्रैवर्णिकानामन्यतमापि, अग्नेर्मथनं यथेष्टं अग्निनिष्पत्तिं यावत्कुर्यात् ॥ ८ ॥

जातस्याग्नेर्लक्षणं रेखोल्लेखनादिरूपं कृत्वा तत्र स्थानेऽग्निं प्रवेश्य समिधं प्रक्षिप्य ब्रह्मोपवेशनं कुर्य्यात् ॥ ९ ॥

---

प्रभा ।

तथा द्रोहकारिणीं द्वेषकारिणीं आज्ञासम्पादनमकुर्व्वतीं अन्येन पुंसा सङ्गताश्च न नियुञ्जीत । द्रोहो जिघांसा, द्वेषः प्रसिद्धः ॥ ७ ॥

तत इति । उक्तक्रमेण सर्व्वाभिर्मन्थने कृते पश्चात् आसामन्यतमा उपेतानामुपनीतानां त्रैवर्णिकानामन्यतमा या शक्ततमा अतिशयेन बलवती असवर्णा सवर्णा वा सा यथेष्टमग्निं मन्थेत् । अग्निनिःसरणपर्य्यन्तं मन्थनं कुर्य्यादित्यर्थः ॥ ८ ॥

जातस्येति । जातस्येति संबन्धलक्षणा षष्ठी । अग्नौ जाते

ततः पूर्णाहुतिं हुत्वा* सर्वतन्त्रसमन्विताम्।
गान्दद्याद्यज्ञवास्त्वन्ते ब्रह्मणे वाससी तथा ॥१०॥

परिशिष्टप्रकाशः।

ब्रह्मोपवेशनानन्तरं सर्वाधानेतिकर्त्तव्यतायुक्तां पूर्णाहुतिं कृत्वा दर्भजुटिकाहोमान्ते ब्रह्मणे गां वासोद्वयञ्च दद्यादिति ॥ १० ॥

प्रभा।

निःसृते सतीत्यर्थः। रेखोल्लेखनादिरूपं गृह्योक्तं लक्षणसंज्ञकं कर्म्म कृत्वा तमग्निं तत्र प्रणीय समिध्य प्रज्वाल्य समिधश्चाधाय ब्रह्मोपवेशनं कारयेत्। समिदाधानानन्तरं ब्रह्मोपवेशनमित्याधान एवायं क्रमः। तत्रैवाभिधानात्। अन्यत्र तु कर्म्मक्रमोगृह्यासंग्रहे गोभिलपुत्रेणोक्तः। यथा—

"लेखनाभ्युक्षणे कृत्वा निहितेऽग्नौ समिद्दत्।
ततो भूमिग्रहं कृत्वा कुर्य्यात् परिसमूहनम् ॥
ब्रह्माणमुपसङ्कल्प्य चरुश्रपणमारभेत्" ॥

इति ॥ ९ ॥

तत इति। तन्त्रमितिकर्त्तव्यता। ततो ब्रह्मोपवेशनानन्तरं सर्व्वाभिराधानेतिकर्त्तव्यताभिः सहितां पूर्णाहुतिं हुत्वा गृह्योक्तयज्ञवास्तुनामककर्म्मणोऽन्ते ब्रह्मणे गां वाससी च दद्यात् ॥ १० ॥

* कृत्वा, इति पाठान्तरम्।

होमपात्रमनादेशे द्रवद्रव्ये स्रुवः स्मृतः ।
पाणिरेवेतरस्मिंस्तु स्रुचा चात्र न हूयते ॥ ११ ॥
खादिरोवाऽथ पार्णोवा द्विवितस्तिः स्रुवः स्मृतः ।
स्रुग्बाहुमात्रा विज्ञेया वृत्तस्तु प्रग्रहस्तयोः ॥१२॥

परिशिष्टप्रकाशः ।

कृताधानस्य नानाविधहोमप्रसक्तौ प्रथमं तत्परिभाषामाह— द्रवद्रव्याहुतौ आहुत्याधारपात्रानुपदेशे मुनिभिः स्रुवः स्मृतः । द्रवेतराहुतौ पात्रान्तरानुपदेशे पाणिनैव होतव्यम् । उभयत्रैवानुपदेशे जुह्वा होमो न कार्य्य इति । जुहूरिति समाख्याबलात् जुह्वा अपि वैकल्पिकहोमसाधनत्वशङ्कानिरासार्थं स्रुचा चात्र न हूयते इत्युक्तम् ॥ ११ ॥

गोभिलोक्तं स्रुवं स्रुचञ्च स्पष्टीकरोति । खदिरमयः पलाश-

प्रभा ।

कृताधानस्य यजमानस्य नित्यनैमित्तिकानानाविधा होमाविहिताः । तत्र परिभाषां तावदाह होमपात्रमिति । होमसाधनपात्रस्यानादेशे द्रवद्रव्ये हविषि स्रुवोहोमपात्रं स्मृतोमुनिभिः । द्रवद्रव्येतरस्मिंस्तु हविषि पाणिरेव होमपात्रम् । अत्र पात्रानादेशे स्रुचा न हूयते । स्रुचा न हूयते इति वचनात् याज्ञिकसम्प्रदायागतोऽयमर्थः इत्युक्तं भवति । स्रुक् जुहूरित्यनर्थान्तरम् ॥ ११ ॥

स्रुवं स्रुचञ्च लक्षयति खादिर इति । पर्णः पलाशः ।

स्रुवाग्रे घ्राणवत् खातं द्व्यङ्गुष्ठं परिमण्डलम्।
जुह्वाः शराववत् खातं सनिर्वाहं षडंगुलम्॥१३॥

परिशिष्टप्रकाशः।

मयो वा वितस्तिद्वयमानः स्रुवः स्मृतः। जुहूर्बाहुप्रमाणा बोद्धव्या। प्रगृह्यतेऽस्मिन्निति व्युत्पत्त्या प्रग्रहो दण्डः। स स्रुवस्रुचोर्वर्त्तुलोबोद्धव्यः॥ १२ ॥

स्रुवाग्रे नासारन्ध्रवन्मध्यस्थितमर्य्यादम् अङ्गुष्ठद्वयमितं वर्त्तुलं विलं ज्ञेयम्। जुह्वास्तु खातं शरावाकृति निःशेषहवनसाधनतया निर्वाहपदवाच्यप्रणालीसहितं षडङ्गुलं जानीयात्॥ १३॥

प्रभा।

वितस्तिर्द्वादशाङ्गुलम्। वितस्तिद्वयपरिमितः खादिरः पालाशो-वा स्रुवः स्मृतः। जुहूर्बाहुप्रमाणा वेदितव्या। तयोः स्रुवस्रुचोः प्रगृह्यते अस्मिन्निति प्रग्रहो धारणदण्डः वृत्तो वर्त्तुलः विज्ञेयः॥ १२॥

स्रुवाग्रे इति। स्रुवस्याग्रे यत् खातं, तत् घ्राणवत् अङ्गुष्ठद्वय-परिमितं परिमण्डलं वर्त्तुलं कर्त्तव्यम्। घ्राणवदित्यनेन यथा नासारन्ध्रद्वयं मध्यस्थितमर्य्यादं, तथा स्रुवाग्रस्थितं खातमपि मध्यस्थितमर्य्यादं कर्त्तव्यमित्युपदिशति। जुह्वाः खातं षडङ्गुल-परिमितं शराववत् कर्त्तव्यम्। तत्तु सनिर्वाहं प्रणालीसहितम्। सा हि निःशेषहवनसाधनतया निर्वाहपदेनोच्यते॥ १३॥

तेषां प्राक्शः कुशैः कार्य्यः सम्प्रमार्ज्जो जुहूषता ।
प्रतापनञ्च लिप्तानां प्रक्षाल्योष्णेन वारिणा ॥१४॥
प्राञ्चं प्राञ्चमुदगग्नेरुदगग्रं समीपतः ।
तत्तथाऽऽसादयेद्‌द्रव्यं यद्यथा विनियुज्यते ॥१५॥

---

परिशिष्टप्रकाशः ।

तेषां व्यक्तिभेदाद्बहूनां पूर्व्वाभिमुखं मार्ज्जनं कुशैः कार्य्यम् । घृतादिलेपवतान्तु तेषामुष्णेन जलेन प्रक्षालनपूर्व्वमग्नौ प्रतापनं कार्य्यम् । सम्प्रमार्ग इति वा पाठः ॥ १४ ॥

स्रुवस्रुगादिद्रव्यमुपयोगसन्निधिक्रमेण स्वसमीपदेशेष्वेकस्मात् पूर्व्वमेकं ततः पूर्व्वमपरमित्येवं क्रमेणाग्नेरुत्तरतः उत्तराग्रं स्थापयेत् ॥ १५ ॥

---

प्रभा ।

तेषामिति । व्यक्तिभेदाद्बहुवचनमन्येषामपि यज्ञपात्राणां संग्रहार्थं वा । जुहूषता होतुमिच्छता तेषां प्राक्शः पूर्व्वाभिमुखं कुशैः सम्प्रमार्गः सम्यक् प्रकर्षेण मार्ज्जनं कार्य्यम् । सम्प्रमार्ज्ज इति पाठे स्वार्थः प्रयोगः । आज्यादिलिप्तानां तेषामग्नौ प्रतापनञ्च कार्य्यम् । किं कृत्वा ? उष्णेन जलेन प्रक्षाल्य ॥ १४ ॥

प्राञ्चं प्राञ्चमिति । अग्नेरुत्तरस्यां दिशि स्वसन्निधौ विनियोगक्रमेण पूर्व्वपूर्व्वक्रमेण चोत्तराग्रं द्रव्यमासादयेत् । यस्य प्रथमं विनियोगः तत् प्रथममासादयेत्, यस्य तदनु विनियोगः

आज्यं द्रव्यमनादेशे जुहोतिषु विधीयते।
मन्त्रस्य देवतायाश्च प्रजापतिरितिस्थितिः॥ १६॥

---

परिशिष्टप्रकाशः।

होमेषु होतव्यानुपदेशे आज्यं द्रव्यं होतव्यं विधीयते। आज्यं गव्यमिति पाठान्तरम्। मन्त्रदेवतयोश्चानुपदेशे प्रजापतिर्देवता मन्त्रोऽपि प्रजापतिः, प्रजापतये स्वाहेत्यर्थः। अन्ये तु, समस्तां व्याहृतिं प्राजापत्यं मन्त्रमाहुः। तत्र च मन्त्रे प्रजापतिशब्द-प्रयोगात् मन्त्रमयी देवतेतिव्यक्तम्। तथा योगियाज्ञवल्क्यः।

"यस्य यस्य तु मन्त्रस्य उद्दिष्टा या तु देवता।
तदाकारं भवेत्तस्य देवत्वं देवतोच्यते"॥ १६॥

---

प्रभा।

तत् ततः परमित्येवं रीत्या एकस्मात् पूर्व्वमपरं ततोऽपि पूर्व्व-मपरमित्येवं क्रमेणासादयेदित्युक्तं भवति। पुरोडाशकपालेन तुषानुपवपतीत्यत्र यथा भविष्यता पुरोडाशेन कपालस्य निर्देश-स्तथाऽत्रापि भविष्यताऽग्निनोत्तरस्या दिशो निर्देशो बोद्धव्यः। कुतः?

"भूमिः समूहनं कृत्वा गोमयेनोपलिप्य च।
द्रव्याण्युत्तरतः स्थाप्य दर्वीं कुर्य्यादुदङ्मुखीम्"॥

इति गृह्यासंग्रहे भूमिलेपनानन्तरमेव द्रव्यासादनाभि-धानात्॥ १५॥

आज्यमिति। होमेषु हविषोऽनादेशे आज्यं होमसाधन-

नाङ्गुष्ठादधिका ग्राह्या समित् स्थूलतया क्वचित् ।
न वियुक्ता त्वचा चैव न सकीटा न पाटिता ॥ १७ ॥

---

परिशिष्टप्रकाशः ।

समिधमाधायानुपर्युक्षेदिसूत्रोक्तां समिधं परिमाणादिनियमेन व्यक्तीकरोति । अङ्गुष्ठाधिकस्थूला क्वचिदपि कर्म्मणि समिन्न ग्रहीतव्या । तदूना तु स्थौल्येन ग्राह्यैव । शेषं सुगमम् ॥ १७ ॥

---

प्रभा ।

द्रव्यमाचार्य्यैः क्रियते । मन्त्रस्य देवतायाश्चानादेशे प्रजापतिरिति श्रुतिराह । यद्यपि धातुस्वरूपेऽर्थे श्तिपोविधिं शाब्दिकाः स्मरन्ति, तथापि इतिकर्त्तव्यताविधेर्य्यजतेः पूर्व्ववत्त्वमिति ईत्तते-र्नाशब्दमिति चैवमादिपारमर्षप्रयोगदर्शनाद् भावेऽपि तस्य विधिर्मन्तव्यः । अतएव न्यायाचार्य्यैरपि,—

"स्वर्गापवर्गयोर्मार्गमामनन्ति मनीषिणः ।
यदुपास्तिमसावत्र परमात्मा निरूप्यते" ॥

इति प्रयुक्तम् ॥ १६ ॥

समिधमाधायानुपर्य्युक्ष्य इति गोभिलसूत्रोक्तां समिधं व्यक्तीकरोति नाङ्गुष्ठादिति द्वाभ्याम् । होमेषु इति विजानता इति च पदद्वयमुत्तरश्लोकस्थमत्राप्यन्वेति । स्थूलतया अङ्गुष्ठादधिका त्वचा विनिर्मुक्ता कीटसहिता विपाटिता समित् केषुचिदपि होमेषु विजानता न ग्रहीतव्या । अङ्गुष्ठादूनस्थूला तु न निषिद्धा ॥ १७ ॥

प्रादेशान्नाधिका नोना न तथा स्याद्विशाखिका।
न सपर्णा न निर्वीर्य्या होमेषु च विजानता ॥ १८ ॥
प्रादेशद्वयमिध्मस्य प्रमाणं परिकीर्त्तितम्।
एवंविधाः स्युरेवेह समिधः सर्वकर्मसु ॥ १९ ॥

---

परिशिष्टप्रकाशः।

दैर्घ्येण समित्प्रादेशादधिका न्यूना वा, तथा विविधशाखायुक्ता, सपत्रा, घुणादिक्षतयाऽतिजीर्णा, होमविषये विजानता न ग्राह्या। अन्ये तु विशाखा विनिर्गतशाखा, तत्प्रभवा विशाखिकेत्याहुः ॥ १८ ॥

अथेध्मानुपकल्पयते खादिरान् पालाशान् वा इति सूत्रोक्तानिध्मान् स्पष्टीकरोति। पूर्वार्द्धं निगदव्याख्यातम्। यद्यपि सूत्रे

---

प्रभा।

प्रादेशादिति। दैर्घ्येण प्रादेशपरिमाणादधिका न्यूना च, विविधशाखायुक्ता, पत्रसहिता, घुणादिक्षतया निर्व्वीर्य्या च, समित् विजानता होमेषु न ग्राह्या। गृह्यासंग्रहः—

"अकृशा चैव न स्थूला अशाखा चापलाशिनी।
सक्षीरा नाधिका न्यूनाः समिधः सर्व्वकामदाः" ॥

इति ॥ १८ ॥

अथेध्मानुपकल्पयते खादिरान् पालाशान् वा इति गोभिलसूत्रोक्तानिध्मान् स्पष्टयति प्रादेशद्वयमिति द्वाभ्याम्। प्रादेशद्वय-

समिधोऽष्टादशेध्मस्य प्रवदन्ति मनीषिणः ।
दर्शे च पौर्णमासे च क्रियास्वन्यासु विंशतिम् ॥२०॥
समिदादिषु होमेषु मन्त्रदैवतवर्ज्जिता ।
पुरस्ताच्चोपरिष्टाच्च इन्धनार्थं समिद्भवेत् ॥ २१ ॥

---

परिशिष्टप्रकाशः ।

अथेध्मानिति दर्शपौर्णमासौ प्रकृत्योक्तम्, तथापीह गृह्योक्तेषु सर्वकर्मसु प्रादेशद्वयमानाः इध्माख्याः समिधोभवेयुः । समिध इति संज्ञालिङ्गादेव इध्मानामप्यग्निसमिन्धनार्थत्वमित्युक्तं भवति ॥१८॥

इध्मसमिधां सङ्ख्यामाह । निगदव्याख्यातम् ॥ २० ॥

ब्रह्मचारिणो यत्र सायं प्रातः समिद्धोमस्ततः प्रभृति सर्वेषु

---

प्रभा ।

मिध्मस्य प्रमाणं कथितं पूर्व्वाचार्य्यैः । यद्यपि गोभिलेन दर्श-पौर्णमासोपक्रमे इध्मा उक्ताः, तथापि एवंविधाः समिध इध्माः इह गृह्योक्तेषु सर्व्वकर्म्मसु भवेयुरेव ॥ १८ ॥

समिध इति । दर्शपौर्णमासयोः इध्मस्य समिधः अष्टादश-संख्यां, अन्यासु क्रियासु विंशतिसंख्यां मनीषिणः कथयन्ति । इध्मस्येति सम्बन्धलक्षणा वा षष्ठी । तदा च अष्टादशविंशति-शब्दौ संख्येयवचनौ तत्र च समिध इति सामानाधिकरण्येना-न्वेति ॥ २० ॥

समिदादिषु इति । ब्रह्मचारिणो यत् सायंप्रातः समिदा-धानमुक्तं, तदिह समित्पदेन गृह्यते । समिदादिषु सर्व्वेषु होमेषु

इध्मोऽप्येधार्थमेवाग्नेर्हविराहुतिषु स्मृतः।
यत्र चास्य निवृत्तिः स्यात्तत् स्पष्टीकरवाण्यहम् ॥२२॥
अङ्गहोमसमित्तन्त्रसोष्यन्त्याख्येषु कर्मसु।
येषाञ्चैतदुपर्युक्तं तेषु तत्सदृशेषु च ॥ २३ ॥

---

परिशिष्टप्रकाशः।

होमेषु देवतामन्त्राभ्यां रहिताऽग्निसमिन्धनार्था प्रादेशमात्रा या समिदुक्ता, सा होमात्पूर्वं पश्चाच्च भवेत् ॥ २१ ॥

चरुपुरोडाशादिरूपहविराहुतिषु इध्मोऽप्यग्निसमिन्धनार्थ एव प्रादेशद्वयमात्रसमिन्मुनिभिः स्मृता। यतोऽयमपि समिन्धनार्थोऽतोन देवतोद्देशेन त्यजनीय इति अत्रापि मन्त्रदेवतयोरभावः। अतोमन्त्रस्य देवतायाश्चेतिवचनानवकाशः ॥ २२ ॥

अङ्गहोमाः सीमन्तोन्नयनचूड़ाकरणादौ विहितास्तेषु अन्यस्य

---

प्रभा।

होमात् पूर्व्वं पश्चाच्च अग्निसमिन्धनार्थं मन्त्रदेवताभ्यां रहिता पूर्व्वोक्ता समिद् भवेत्। अग्नौ प्रक्षेप्तव्या इत्यर्थः ॥ २१ ॥

इध्मोऽपीति। हविराहुतिषु अविशेषात् चर्व्वाज्यादिहोमेषु पूर्व्वोक्तलक्षण इध्मोऽपि अग्नेरेधार्थं समिन्धनार्थमेव स्मृतः पूर्व्वाचार्य्यैः। अग्नेरेधार्थमेवेति करणात् अत्रापि मन्त्रो देवता च नास्तीत्युक्तं भवति। येषु होमेषु इध्मस्य निवृत्तिर्भवेत्तदहं स्पष्टीकरोमि ॥ २२ ॥

यत्र यत्रेध्मो न कर्त्तव्यः तदेव स्पष्टीकरोति अङ्गहोमेति

अक्षभङ्गादिविपदि जलहोमादिकर्म्मणि ।
सोमाहुतिषु सर्व्वासु नैतेष्विध्मो विधीयते ॥२४॥

अष्टमः खण्डः ।

---

परिशिष्टप्रकाशः ।

सीमन्तोन्नयनादेः प्रधानत्वात् । तथा द्विविधा होमास्तन्त्रहोमाः चिप्रहोमाश्च याज्ञिकप्रसिद्धाः । तत्र चिप्रहोमाः चिप्रं हूयन्ते इति व्युत्पत्त्या सायंप्रातर्होमादयः । तन्त्रहोमाश्च परिसमूहन-बर्हिःस्तरणाद्यङ्गविस्तारयुक्ताः । तत्र ये समिद्धविष्कास्तन्त्रहोमाः, यश्च सुखप्रवार्थं सोष्यन्तीहोमः, येषां च वैश्वदेवसायंप्रातर्होमा-दीनामेतदिध्माख्यं द्रव्यं पश्चादध्मानुपकल्पयत इत्यनेन सूत्रेणोक्तं, तेषु तत्सदृशेषु च चिप्रहोमेषु इध्मस्य निर्वृत्तिर्भवेदिति ॥ २३ ॥

जढ़ाया यानेन वरेण नयनं गृह्योक्तम् । तत्राक्षभङ्गेऽनडुद्-विमोक्षे यानविपर्यासेऽन्यासु चापत्सु यमेवाग्निं हरन्ति तमेवोप-समाधाय व्याहृतिभिर्हुत्वा अन्यद् द्रव्यमाहृत्य यज्ञतेचिदभिश्रिय-इत्याज्यशेषेणाभ्यञ्ज्यादिति सूत्रेणाक्षभङ्गादियानविपदि तत्समाधा-नार्थं योहोमोविहितः, यश्च पौर्णमास्यां रात्रावविदासिनि ह्रदे

---

प्रभा ।

द्वाभ्याम् । ये किल सीमन्तोन्नयनचूड़ाकरणादिकर्म्माङ्गभूताः होमाः, ये समिद्धविष्कास्तन्त्रहोमाः, यश्च आसन्नप्रसवाया बध्वाः सुखप्रसवार्थं सोष्यन्तीहोमः, येषाञ्च वैश्वदेवसायंप्रातर्होमादीना-मुपरि परस्तात् एतदिध्माख्यं द्रव्यं, ययेध्मानुपकल्पयते,—इति

परिशिष्टप्रकाशः ।

नाभिमात्रमवगाह्य अक्षततण्डुलान् ऋगन्तेष्वास्येन जुहुयात् स्वाहेत्युदके इत्यनेन सूत्रेण मुखेन यवमिश्रतण्डुलानां हृच्छ इत्यादिपञ्चर्चस्य प्रथमया ऋचा भूमिकामस्य जलहोम उक्तः। याश्च सोमरसाहुतयस्तास्विध्मविधिर्न भवति। अक्षो रथावयवविशेषः। अत्र इध्मविधिनिवृत्तिरित्यभिदधता पर्य्युदासोऽयमित्युक्तम्। न तु निषेधविधिः। येनाक्षभङ्गादिविषये विहितनिषिद्धत्वादिध्मविकल्पः स्यादित्यापाद्यम्। जलहोमादीत्यादिपदेन पदवर्त्मचित्याधारहोमानां ग्रहणम्। तथा च श्रुतिः। पदे जुहोति वर्त्मनि जुहोतीति। स्मृतिश्च,—

"लौकिके वैदिके वापि हुतोच्छिष्टे जले क्षितौ।
वैश्वदेवश्च कर्त्तव्यः पञ्चसूनापनुत्तये" ॥

इति ॥ २४ ॥

अष्टमः खण्डः ।

---

प्रभा ।

सूत्रेण गोभिलेनोक्तं, तेषु तत्सदृशेषु अन्येष्वपि क्षिप्रहोमेषु। द्विविधाः किल होमा याज्ञिकप्रसिद्धाः, तन्त्रहोमाः क्षिप्रहोमाश्च। ये किल होमाः परिसमूहनवर्हिरास्तरणाद्यङ्गविस्तारयुक्तास्ते तन्त्रस्येतिकर्त्तव्यताकलापस्य योगात् तन्त्रहोमा इत्युच्यन्ते। ये च तथाविधाङ्गविस्तारयुक्ता न भवन्ति, तदमी सायंप्रात-

प्रभा ।

होमादयः क्षिप्रं हूयन्ते इति व्युत्पत्त्या क्षिप्रहोमाः कथ्यन्ते । तथा, अक्षभङ्गे नद्धविमोक्षे यानविपर्य्यासेऽन्यासु चापत्सु यमेवाग्निं हरन्ति तमेवोपसमाधाय व्याहृतिभिर्हुत्वाऽन्यद्द्रव्यमाहृत्य य ऋते चिदभिश्रिष इत्याज्यशेषेणाभ्यञ्ज्यात् इति गोभिलसूत्रेण अक्ष-भङ्गनद्धविमोक्षादिविपदि तत्समाधानार्थं योहोमो विहितः, यश्च पौर्णमास्यां रात्राववविदासिनि ह्रदे नाभिमात्रमवगाह्याक्षत-तण्डुलान् ऋगन्तेष्वास्येन जुहुयात् स्वाहेत्युदके इति गोभिल-सूत्रेण जलहोम उक्तः, आदिपदात् यश्च पदवर्त्महोमः, तथा, याः सोमरसाहुतयः, सर्व्वेष्वेतेषु होमेषु याज्ञिकैरिध्मोन क्रियते । कृत्याहुतिष्विति पाठे अभिचाराहुतिष्वित्यर्थः ॥ २३ ॥ २४ ॥

इति अष्टमः खण्डः ।

---

## नवमः खण्डः ।

सूर्येऽस्तशैलमप्राप्ते षट्त्रिंशद्भिरथाङ्गुलैः ।
प्रादुष्करणमग्नीनां प्रातर्भासाञ्च दर्शने ॥ १ ॥

---

परिशिष्टप्रकाशः ।

पुराऽस्तमयादग्निं प्रादुष्कृत्यास्तमिते सायमाहुतिं जुहुयात् । पुरोदयात्प्रातः प्रादुष्कृत्योदितेऽनुदिते वा प्रातराहुतिञ्जुहुयादिति सूत्रे अग्नेः प्रादुष्करणमुक्तम् । तत्र प्रादुष्करणकालस्य उत्तरोऽवधिरस्तमयोदयरूपो व्यक्तएव । पूर्व्वन्त्वस्पष्टं स्पष्टयति ।

भासान्दर्शने सूर्यरश्मिलोहिते प्राग्दिग्भागे इत्यर्थः । शेषं सुगमम् ॥ १ ॥

---

प्रभा ।

पुराऽस्तमयादग्निं प्रादुष्कृत्यास्तमिते सायमाहुतिं जुहुयात् पुरोदयात् प्रातः प्रादुष्कृत्योदितेऽनुदिते वा प्रातराहुतिं जुहुयात् इति गोभिलसूत्रेणाग्नेः प्रादुष्करणकालः सायंप्रातर्होमकालयोक्तः । तत्र प्रादुष्करणकालयोरुत्तरोऽवधिरस्तमयरूप उदयरूपश्च स्पष्ट एव । तयोः पूर्व्वमवधिमस्पष्टं स्पष्टयति सूर्य्ये इति । सूर्य्ये षट्त्रिंशद्भिरङ्गुलैरस्ताचलमप्राप्ते सति सायमग्नीनां प्रादुष्करणम् । भासां सूर्य्यरश्मीनां दर्शने सति प्रातरग्नीनां प्रादुष्करणकालः । सोऽयं पूर्व्वोऽवधिः । अग्नीनामिति बहुवचनात् त्रेताग्निप्रादुष्करणकालोऽप्ययमेवेति बोद्धव्यम् ॥ १ ॥

हस्तादूर्द्धं रविर्यावद्गिरिं हित्वा न गच्छति ।
तावद्धोमविधिः पुण्योनान्योऽभ्युदितहोमिनाम् ॥२॥

परिशिष्टप्रकाशः ।

उदितेऽनुदिते वा प्रातराहुतिं जुहुयादिति उदितहोमः सूत्रोक्तः । ग्रन्तोत्तरमवधिं व्यक्तीकरोति ।

भूमिं हित्वा हस्तपरिमितदेशादुपरिदेशं सूर्य्योयावन्न गच्छति तावत्कालं होमानुष्ठानं प्रशस्तम् । अभ्युदितहोमिनां नान्यकालीनः प्रशस्तः । अभ्युदित इत्यभिशब्दस्य सर्व्वतोभावार्थस्य उपादानात्सम्पूर्णसूर्य्योदयदर्शने उदितहोमो न त्वर्द्धोदिताविति वेदितव्यम् । एतस्य कालस्य प्राशस्त्याभिधानादसम्भवेऽन्योऽपि काल इति सूचितः । तथाच सूत्रम् । आसायमाहुतेः प्रातराहुतिर्नात्येति आप्रातराहुतेः सायमाहुतिरिति ॥ २ ॥

प्रभा ।

उदितेऽनुदिते वा प्रातराहुतिं जुहुयादिति सूत्रोक्तस्योदितहोमस्योत्तरमवधिं स्पष्टीकरोति हस्तादिति । रविरुदयगिरिं परित्यज्य यावत् हस्तादूर्द्धं न गच्छति, तावदभ्युदितहोमिनामुदितहोमिनां होमविधिः पुण्यो न त्वन्यः पुण्यः । भुवं हित्वेति पाठान्तरम् । अभ्युदितहोमिनामित्यभिरुपसर्गः धात्वर्थमेवानुवर्त्तते । सोऽयमुत्तरोऽवधिः । पूर्व्वमवधिमाह गृह्यासंग्रहः—

"रेखामात्रन्तु दृश्येत रश्मिभिश्च समन्वितम् ।
उदयं तं विजानीयाद्धोमं कुर्य्याद्विचक्षणः" ॥

यावत् सम्यङ् न भाव्यन्ते नभस्यृक्षाणि सर्वतः।
न च लौहित्यमापैति तावत्सायन्तु हूयते ॥ २ ॥

---

परिशिष्टप्रकाशः।

अस्तमिते सायमाहुतिं जुहुयादिति सूत्रोक्तं तत्रोत्तरमवधिं व्यक्तीकरोति।

यावत्सम्यग्दिवि नक्षत्राणि नोपलभ्यन्ते सर्वाणि सूक्ष्माणि न स्थूलानि, सन्ध्यारागश्च न नश्यति। तावत्सायं होमस्य कालः पुख्यः। अत्राप्यसम्भवेऽन्योऽपि आप्रातराहुतेरिति सूत्रोक्तः कालः सूचितः ॥ २ ॥

---

प्रभा।

यत्तु अभ्युदित इत्यभिशब्दस्य सर्व्वतोभावार्थस्योपादानात् सम्पूर्णसूर्य्यमण्डलदर्शने उदितहोमो नार्द्धोदितादाविति नारायणोपाध्यायेनोक्तम्। तद्देतद्वचनानवलोकनेन। पुख्य इत्युपादानान्मुख्योऽयं कालः। अतिपाते तु प्रायश्चित्तं कृत्वा कालान्तरे होतव्यम्। तथाच गोभिलसूत्रम्। आसायमाहुतेः प्रातराहुतिर्नात्येति आप्रातराहुतेः सायमाहुतिः इति ॥ २ ॥

अस्तमिते सायमाहुतिं जुहुयादिति सूत्रोक्तसायमाहुतिकालस्योत्तरावधिं स्पष्टयति यावदिति। यावदाकाशे सर्व्वेषु प्रदेशेषु नक्षत्राणि सम्यक् नोपलभ्यन्ते न च सन्ध्यारागः सम्यगपगच्छति, तावत् सायं हूयते याज्ञिकैः। आपैति आ अपैति ॥ २ ॥

रजोनीहारधूमाभ्रवृक्षाग्रान्तरिते रवौ ।
सन्ध्यामुद्दिश्य जुहुयाद्व्रतमस्य न लुप्यते ॥ ४ ॥
न कुर्य्यात्क्षिप्रहोमेषु द्विजः परिसमूहनम् ।
वैरूपाक्षञ्च न जपेत्प्रपदञ्च विवर्ज्जयेत् ॥ ५ ॥

---

परिशिष्टप्रकाशः ।

उदयास्तमयादर्शने यत्कार्य्यन्तदाह—

पांशुप्रभृतिभिराच्छादिते सूर्य्ये सन्ध्याकालमाकलय्य जुहुयात् । एवमप्यस्य सायंप्रातर्होमनियमरूपव्रतलोपो न भवतीति ॥ ४ ॥

क्षिप्रहोमेषु होतृमात्रसाध्येषु अब्रह्मकेषु सायं प्रातः सोष्यन्तीहोमादिषु, ब्राह्मण इमं स्तोममर्हते इत्यादिसमन्त्रकपरिसमूहनं न कुर्य्यात् । विरूपाक्षप्रपदजपौ च त्यजेत् । प्रपदश्च तपश्च तेजश्च श्रद्धा च ह्रीश्चेत्यादिमन्त्रः । तथाच गृह्यान्तरम्,—

"एकसाध्येष्वबर्हिःसु न स्यात्परिसमूहनम् ।
नोदगासादनञ्चैव क्षिप्रहोमा हि ते मताः" ॥

---

प्रभा ।

रवेरुदयास्तमययोरदर्शने यत् कर्त्तव्यं, तदाह रजोनीहारेति । पांशुभिर्हिमैर्मेघैर्वृक्षाग्रैर्वा रवावाच्छादिते सति सन्ध्यां सन्ध्याकालमुद्दिश्याकलय्य जुहुयात् । एवं जुह्वतोऽस्य सायंप्रातर्होमरूपो नियमो न लुप्यते ॥ ४ ॥

अथेदानीं क्षिप्रहोमेषु विशेषमाह न कुर्य्यादिति । क्षिप्रं

परिशिष्टप्रकाशः।

इति। ननु सायं प्रातर्विहितचिप्रहोम एव अग्निमुपसमाधाय-परिसमूह्येत्यादिना सूत्रेण परिसमूहनमुक्तम्। सत्यम्। किन्तु तदमन्त्रकं विच्छिन्नावयवानामेकीकरणमात्रमुक्तम्। अयं तु समन्त्रकस्य प्रतिषेध इत्यविरोधः॥ ५॥

---

प्रभा।

हूयन्ते इति चिप्रहोमाः सायंप्रातर्होमादयः। तेषु चिप्रहोमेषु इमं स्तोममिति तृचेन परिसमूहेत् इति गोभिलसूत्रोक्तं समन्त्रकं परिसमूहनं द्विजो न कुर्य्यात्। यत्तु गोभिलेन अग्निमुपसमाधाय परिसमूह्य इति सूत्रेण सायंप्रातर्होमे परिसमूहनमुक्तं, तदमन्त्रकं विच्छिन्नानामग्न्यवयवानामेकीकरणमात्रमिति न विरोधः। तथाच गृह्यान्तरम्,—

"एकसाध्येष्ववर्हिःषु न स्यात् परिसमूहनम्।
नोदगासादनञ्चैव चिप्रहोमा हि ते स्मृताः"॥

एकसाध्येष्विति वचनात् सायंप्रातर्होमादिचिप्रहोमेषु ब्रह्मस्थापनमपि न कर्त्तव्यम्। तथाच गृह्यासंग्रहः,—

"राकाग्नौ पितृयज्ञे च ब्रह्माणं नोपकल्पयेत्।
सायं प्रातश्च होमेषु तथैव बलिकर्म्मसु"॥

तथा, चिप्रहोमेषु वैरूपाचप्रपदौ च न जपेत्। तौ च, वैरूपाचः पुरस्ताद्धोमानां काम्येषु च प्रपदः इति गोभिलसूत्रोक्तौ। तत्र विरूपाक्षशब्दयुक्तः भूर्भुवः स्वरोम् महान्तमाकाशं प्रपद्ये विरू-

पर्य्युक्षणन्तु सर्वत्र कर्त्तव्यमदितेन्विति ।
अन्ते च वामदेव्यस्य गानमित्यथवा त्रिधा ॥ ६ ॥
अहोमकेष्वपि भवेद्यथोक्तं चन्द्रदर्शने ।
वामदेव्यं गणेष्वग्ने वल्यग्ने वैश्वदेविके ॥ ७ ॥

परिशिष्टप्रकाशः ।

पर्य्युक्षणमन्ते च वामदेव्यगानं सर्व्वत्र क्षिप्रहोमेष्वपि कुर्य्यात् । अथवा गानाशक्तौ त्रिधा कया न इत्यादि पठेत् । गानङ्कुर्य्या दृचस्त्रिधेति वा पाठः । तदा व्यक्तएवार्थः । शेषं सुव्यक्तम् ॥ ६ ॥

होमरहितेष्वपि कर्म्मसु वामदेव्यं भवेत् । यथा, चन्द्रदर्शने

प्रभा ।

पाप्मोऽसीत्यादिको मन्त्रो वैरूपाक्षः । प्रपदस्तु तपश्च तेजश्चेत्यादिको मन्त्रः । यद्यपि काम्येष्वत ऊर्द्धमित्युपक्रम्याभिधानात् काम्येषु प्रपदवैरूपाक्षजपो विहितः नित्याश्चेमे सायंप्रातर्होमादयः, तथापि सोष्यन्तीहोमादिवत् काम्यस्यापि क्षिप्रहोमस्य सम्भवात् पूर्व्वेषु चैके इति सूत्रेण नित्येष्वपि तस्य पक्षप्राप्तत्वाच्च तन्निषेधोनानुपपन्नः ॥ ५ ॥

पर्य्युक्षणन्त्विति । सर्व्वत्र क्षिप्रहोमेष्वपि अदितेऽनुमन्यस्व इत्यादिमन्त्रेण पर्य्युक्षणं, कर्म्मान्ते वामदेव्यगानञ्च कर्त्तव्यम् । अथवेति गानाशक्तौ यासु ऋक्षु वामदेव्यं गीयते, ताऋचः त्रिधा पठनीयाः । गानं कुर्य्यादृचस्त्रिधेति पाठे व्यक्त एवायमर्थः ॥ ६ ॥

अहोमकेष्वपीति । होमरहितेष्वपि कर्म्मसु वामदेव्य-

यान्यधः स्तरणाम्नानान्न तेषु स्तरणं भवेत्।
एककार्य्यार्थसाध्यत्वात्परिधीनपि वर्जयेत् ॥ ८ ॥

परिशिष्टप्रकाशः।

निःक्रमणे उक्तम्। तथा, समुदायेन क्रियमाणेषु कर्मसु गणान्ते वामदेव्यम्।, न त्वेकैककर्म्मान्ते। पञ्चयज्ञान्तर्गतवैश्वदेविकहोमे च यद्वामदेव्यन्तद्वल्यन्ते न तु होमानन्तरमेव भवेदिति ॥ ७ ॥

अग्निमुपसमाधाय कुशैः समन्तं परिस्तृणुयादितिस्तरणोपदेशात्पूर्व्वं यानि सायं प्रातर्होमादीनि गोभिलोक्तानि, तेषु स्तरणन्नास्ति। तथा तेषु परिधीनपि स्तरणवैकल्पिकान्—परिधीनप्येके कुर्व्वन्तीत्युक्तान् त्यजेत्। हेतुमाह। एककार्य्येत्यादि। यथा स्तरणस्य होमरूपकार्य्यार्थैकत्वात् अग्निवेष्टनं साध्यम्, तथा परिधीनामपि। अतस्तुल्यकार्य्यत्वात् परिधीनामपि निवृत्तिरिति। अथवा होमार्थैकहोमकर्त्तृमात्रसाध्यत्वेन क्षिप्र-

प्रभा।

गानं भवेत्। तत्र निदर्शनं, यथोक्तं चन्द्रदर्शने इति। यथा चन्द्रदर्शने निष्क्रमणे उक्तमित्यर्थः। तथा, गणेषु संघशः क्रियमाणेषु अनेकेषु कर्मसु, गणस्यान्ते एकं वामदेव्यगानं भवेत् न प्रति कर्मान्ते। एवं पञ्चयज्ञान्तर्गतवैश्वदेवहोमस्यान्ते यद्वामदेव्यगानं, तत् बलिकर्म्मणोऽन्ते भवेत्, न तु वैश्वदेवहोमस्यान्ते एव ॥ ७ ॥

यान्यध इति। अग्निमुपसमाधाय कुशैः समन्तं परिस्तृणुयात् इति सूत्रेण गोभिलेन यत्परिस्तरणमुपदिष्टं, तस्मादधः पूर्व्वं

वर्हिः पर्य्युक्षणञ्चैव वामदेव्यजपस्तथा ।
कृत्याहुतिषु सर्व्वासु चिकमेतन्न विद्यते ॥ ९ ॥
हविष्येषु यवामुख्यास्तदनु व्रीहयः स्मृताः ।
माषकोद्रवगौरादीन् सर्वालाभेऽपि वर्जयेत् ॥१०॥

---

परिशिष्टप्रकाशः ।

होमत्वात् स्तरणपरिध्योर्निवृत्तिरिति । अतएकसाध्येष्ववर्हिः-स्विति ग्रन्थान्तरम् ॥ ८ ॥

अभिचारहोमेषु सर्व्वेषु वर्हिरादित्रिकं नास्ति । अतो न कर्त्तव्यमिति ॥ ९ ॥

अथ हविष्यस्यान्नस्याग्नौ जुहुयात्,—इति सूत्रोक्तं हविष्यं स्पष्टयति ।

हविष्यमध्ये यवाः श्रेष्ठाः प्राथमिककल्पा इत्यर्थः । तदनन्तरं

---

प्रभा ।

यानि सायंप्रातर्होमादीनि गोभिलेनोक्तानि, तेषु स्तरणं न भवति न कार्य्यमित्यर्थः । तथा "परिधीनप्येके कुर्व्वन्ति" इति गोभिल-सूत्रोक्तान् परिधीनपि तेषु वर्ज्जयेत् । तत्रहेतुः, एककार्य्यार्थसाध्य-त्वादिति । यथा स्तरणस्य होमकार्य्यार्थं परिवेष्टनं साध्यं, तथा परिधीनामपि । अतः स्तरणवत् परिधीनपि वर्ज्जयेत् ॥ ८ ॥

वर्हिरिति । वर्हिःस्तरणं, पर्य्युक्षणं अदितेऽनुमन्यस्व इत्यादि मन्त्रैर्यदुक्तं,वामदेव्यजपश्च, एतत्त्रयं सर्व्वेष्वभिचारहोमेषु नास्ति ॥९॥

अथ हविष्यस्यान्नस्याग्नौ जुहुयादिति गोभिलसूत्रोक्तं हविष्यं

पाण्याहुतिर्द्वादशपर्वपूरिका
कंसादिना चेत् स्रुवपूरमात्रिका।
दैवेन तीर्थेन च हूयते हविः
स्वङ्गारिणि स्वर्चिषि तच्च पावके॥ ११॥

परिशिष्टप्रकाशः।

षष्टिकाख्याः स्मृता आनुकल्पिका इति यावत्। माषकोद्रव-गौरसर्षपादीन् मुद्गकलायगोधूमाद्यभावेऽपि वर्ज्जयेत्। एतेन मुद्गादयः आपत्कल्पिका इत्युक्तं भवति। आदिपदेन राजमाषा-दीनां ग्रहणम्। गोभिलभाष्यकृता तु, कोरादीनिति पठितं व्याख्यातञ्च कोरोवर्व्वट इति॥ १०॥

अङ्गुलीनां द्वादशपर्व्वाणि यया पूर्य्यन्ते तावत्परिमाणा पाण्याहुतिः कार्य्या। हविष्याभावे दधिपयोयवागूभिर्यदा

प्रभा।

व्यक्तीकरोति हविष्येषु इति। हविष्येषु मध्ये यवाः श्रेष्ठाः, व्रीहयः तदनु तत्सदृशाः अनुकल्पा इत्यर्थः। व्रीहिः शरत्पक्वधान्यम्। सर्व्वेषामलाभेऽपि माषादीन् वर्ज्जयेत्। माषः समीधान्यविशेषः। कोद्रवः कोरदूषः। गौरः श्वेतसर्षपः। आदिपदात् राज-माषादीनां ग्रहणम्। कोरादीनिति पाठे कोरोवर्व्वटः। एवञ्च माषादिनिषेधात् मुद्गादय आपत्कल्पा इत्युक्तं भवति॥ १०॥

पाण्याहुतिरिति। अङ्गुलीनां द्वादशपर्व्वाणि यावता पूर्य्यन्ते तावत्परिमाणा पाण्याहुतिः कर्त्तव्या। "कंसेन वा चरुस्थाल्या वा

परिशिष्टप्रकाशः।

होमस्तदा कंसेन चरुस्थाल्या स्रुवेण वै वेति सूत्रोक्तकंसादिकमाहुत्यधिकरणम्। सा चाहुतिः स्रुवपूरपरिमाणा। सर्व्वएव च होमोदेवतीर्थेन हविर्भक्ततापादकाङ्गारयुक्तेऽलिङ्गितेऽग्नौ कार्य्य इति। रसादिना चेदित्यपपाठः। हविराधारपाणिसाहचर्य्यविरोधात्। यत्र गर्ग्यव्यासवचनम्*। उत्तानकरपञ्चाङ्गुल्यग्रैर्बलिं हरेत्। श्वपचकाकारेणोत्तानाङ्गुष्ठाङ्गुलिद्वयाग्रपर्वमात्रं प्रपूर्य्य जुहुयात्। तद्गोभिलीयेतरविषयं, गोभिलीयानामप्यसम्भवविषयम्।

"आर्द्रामलकमानेन कुर्य्याद्धोमहविर्बलीन्।
प्राणाहुतिबलिञ्चैव रुदं गात्रविशोधनीम्"॥

इत्येतस्याप्येषैव व्यवस्था॥ ११॥

---

प्रभा।

स्रुवेण वै वा" इति गोभिलसूत्रानुसारेण यदि कंसादिना हूयते, तदा स्रुवपूरपरिमाणा आहुतिर्भवति। सर्व्वत्र दैवेन तीर्थेन हविर्हूयते। तच्च हवनं शोभनाङ्गारयुक्ते हविषोभक्ततापादकाङ्गारयुक्ते इति यावत्। ज्वालिंषि शोभनार्चिर्युक्ते वह्नौ कार्य्यम्। परिमाणान्तरं गोभिलीयव्यतिरिक्तविषयम्॥ ११॥

---

* गर्गव्यासवचनम्, इति क पुस्तके पाठः।

योऽनर्चिषि जुहोत्यग्नौ व्यङ्गारिणि च मानवः ।
मन्दाग्निरामयावी च दरिद्रश्च स जायते ॥ १२ ॥
तस्मात् समिद्धे होतव्यं नासमिद्धे कदाचन ।
आरोग्यमिच्छताऽऽयुश्च श्रियमात्यन्तिकीं तथा ॥१३॥
जुहूषंश्च हुते चैव पाणिसूर्पस्फ्यदारुभिः* ।
न कुर्य्यादग्निधमनं न कुर्य्याद्व्यजनादिना ॥ १४ ॥

परिशिष्टप्रकाशः ।

उक्ताङ्गारार्चिःशून्ये त्वग्नौ जुहोति यो मानवः, स दीर्घरोगी जायते । शेषं सुगमम् ॥ १२ ॥

न केवलं समिद्धे होमे मन्दाग्नित्वादिपरिहारः किं त्वारोग्यादयः सातिशयसम्पत्तयोऽपि प्राप्यन्ते इत्यारोग्यमिच्छते-त्यादिनोक्तम् ॥ १३ ॥

होतुमिच्छन् हुते चाग्नौ उद्दीपनं पाण्यादिभिर्न कुर्य्यात् ।

प्रभा ।

योऽनर्चिषीति । योमानवः अर्चिःशून्ये विगताङ्गारे चाग्नौ जुहोति, स मन्दाग्निः, अन्यैरप्यामयैरोगैर्युक्तः, दरिद्रश्च भवति ॥१२॥

तस्मादिति । यस्मादेवं, तस्मात् आत्यन्तिकं आरोग्यं आयुः श्रियञ्चेच्छता समिद्धे अग्नौ होतव्यं, असमिद्धे त्वग्नौ कदाचिदपि न होतव्यमिति निन्दातिशयार्थमुक्तम् ॥ १३ ॥

जुहूषंश्चेति । होमात् पुरस्तात् परस्ताच्च अग्नेरुद्दीपनं हस्ता-

* पाणिसूर्पस्य दारुभिः, इति क पुस्तके पाठः ।

मुखेनैव धमेदग्निं मुखाद्ध्येषोऽध्यजायत ।
नाग्निं मुखेनेति च यल्लौकिके योजयन्ति तत् ॥१५॥

नवमः खण्डः ।

---

परिशिष्टप्रकाशः ।

स्फ्यः खड्गाकारो यज्ञपात्रविशेषः । व्यजनादिनेत्यादिपदं वस्त्रादिग्रहणार्थम् ॥ १४ ॥

केन तर्हि धमेदित्यत आह ।

मुखेनैव ज्वालयेत् । हि यस्मादेषोऽग्निर्मुखादध्यजायत । तथाच पुरुषसूक्तम् । मुखादग्निरजायतेति । अधीति अग्नेः श्रेष्ठताज्ञानः । उत्तमाङ्गमुखस्थानत्वात् । यत्तु नाग्निं मुखेनोपधमे निषेधवचनं, तल्लौकिकेऽग्नौ योजयन्ति न तु संस्कृत इति ॥ १५ ॥

नवमः खण्डः ।

---

प्रभा ।

द्विभिर्न कार्य्यं न कुर्य्यात् । स्फ्यः खड्गाकारोयज्ञपात्रविशेषः । प्रसिद्धमन्यत् । एवं व्यजनादिना अग्निधमनं न कुर्य्यात् । कुर्य्याद्वा व्यजनादिना इति पाठे व्यजनादिना अग्निधमनं विधीयते । अयमेव पाठो बहुषु पुस्तकेषु दृश्यते । नारायणोपाध्यायेन तु न कुर्य्यात् व्यजनादिना इति पठितम् ॥ १४ ॥

मुखेनैके इति । एके आचार्य्या मुखेनाग्निं धमन्ति । नारायणोपाध्यायेन तु मुखेनैव धमेदग्निमिति पठितम् । मुखेनाग्निधमने हेतुः मुखाद्धीति । यस्मादेषोऽग्निः प्रजापतेर्मुखा-

प्रभा।

दजायत, तस्मात् मुखेनाग्निं धमन्ति। तथाच ताण्ड्य ब्राह्मणे। सोऽकामयत यज्ञं सृजेयेति स मुखतएव त्रिवृतमसृजत तं गायत्रीच्छन्दोऽन्वसृज्यताग्निर्दैवता ब्राह्मणो मनुष्यो वसन्तऋतु-स्तस्मात् त्रिवृत् स्तोमानां मुखं गायत्री च्छन्दसामग्निर्दैवतानां ब्राह्मणोमनुष्याणां वसन्तऋतुनां तस्मात् ब्राह्मणोमुखेन वीर्य्यं करोति मुखतो हि सृष्ट इति। मुखादग्निश्च वायुश्च इति च पौरुषे सूक्ते। मुखात् जातस्याग्नेर्मुखेन धमनं युक्तमित्यभिप्रायः। यत्तु, मुखात् मुखपाव्यमन्त्रात् एष संस्कृतोऽग्निरजायत इति तत्त्वकृद्भिर्व्याख्यातं, तदुक्तश्रुत्यनवलोकनेन।

यच्च नाग्निं मुखेनोपधमेत् इति मुखेनाग्निधमनस्य निषेधः स्मर्य्यते, तत्तु लौकिकाग्निधमनविषये योजयन्ति। न त्वाधान-संस्कृताग्निधमनविषये स निषेधः प्रवर्त्तते। लौकिकश्चाग्नि-राधानसंस्कृतादन्य इति वाचस्पतिमिश्रप्रभृतयः। युक्तश्चैतत्। आधानसंस्कृताग्न्युपक्रमे एतदभिधानेन तथा प्रतीतेः।

"अग्निस्तु नामधेयादौ होमे सर्व्वत्र लौकिकः"।

इति नामधेयादौ होमाधिकरणस्याप्यग्नेर्लौकिकशब्देन परा-मर्शाच्च॥ १५॥

इति नवमखण्डः।

## दशमः खण्डः ।

यथाऽहनि तथा प्रातर्नित्यं स्नायादनातुरः ।
दन्तान् प्रक्षाल्य नद्यादौ गेहे चेत्तदमन्त्रवत् ॥ १ ॥

---

परिशिष्टप्रकाशः ।

परिभाषया गोभिलोक्तप्रातर्होमादिकं स्पष्टीकृत्यानुक्तं प्रातः-स्नानमाह—

अरोगोऽहनि स्नाने या परिपाटी तथैव प्रातः प्रत्यहं नदी देवखातप्रस्रवणादिषु स्नायाद्दन्तान् जलेन प्रक्षाल्य। यदि तु गृहे स्नाति तदा स्नानाङ्गमन्त्रशून्यमाप्लवनमात्रं शरीरशुद्ध्यर्थं कुर्य्यात्। तथाच दक्षः,—

"अत्यन्तमलिनः कायोनवच्छिद्रसमन्वितः ।
स्रवत्येव दिवारात्रौ प्रातःस्नानं विशोधनम् ॥
क्लिद्यन्ति हि सुप्तस्य इन्द्रियाणि स्रवन्ति च ।
अङ्गानि समतां यान्ति उत्तमान्यधमानि च * ॥

---

प्रभा ।

स्नानग्रन्थे मध्याह्नस्नानमेवोक्तं न तु प्रातःस्नानं, तदिदानी-मभिधत्ते यथाऽहनीति। यस्य स्नानेन रोगवृद्धिर्भवति सोऽत्रा-तुरपदेनोच्यते। स न भवतीत्यनातुरः। सोऽयमनातुरो-

---

* उत्तमान्यधमैः सह, इति ख पुस्तके पाठः ।

नारदाद्युक्तवार्क्षं*मष्टाङ्गुलमपाटितम्।
सत्वचं दन्तकाष्ठं स्यात्तदग्रेण प्रधावयेत्॥ २॥

परिशिष्टप्रकाशः।

प्रातःस्नानं प्रशंसन्ति दृष्टादृष्टकरं हि तत्।
सर्वमर्हति शुद्धात्मा प्रातःस्नायी जपादिकम्" ॥

दृष्टं मलापकर्षणमदृष्टं शुचित्वम्॥ १॥

दन्तप्रक्षालनं दन्तकाष्ठेन दन्तशोधनपूर्व्वकमित्याह—

नारदाद्युक्तवृक्षभवं यद्दन्तकाष्ठं तस्याग्रेण दन्तान् शोधयेत्। शेषं सुगमम्। तथाच नारदशिक्षा।

प्रभा।

दन्तान् प्रक्षाल्य यथा दिवसे तथा प्रातःकाले नद्यादौ नित्यं स्नायात्। गृहे चेत् तत् स्नानं क्रियते, तदा तत् स्नानं मन्त्रवन्न भवति समन्त्रकमित्यर्थः। प्रातरित्यरुणोदयकालपरम्। प्रातःस्नाय्यरुणकिरणग्रस्तां प्राचीमवलोक्य स्नायादिति विष्णूक्तेः।

"चतस्रो घटिकाः प्रातररुणोदय उच्यते।
यतीनां स्नानकालोऽयं गङ्गाम्भःसदृशः स्मृतः"।

इति स्मृतेश्च। यथाऽहनि तथा प्रातरित्यनेन प्रातःस्नानेऽप्यहः-स्नानधर्म्माः प्रदिश्यन्ते। नद्यादाविति आदिपदेन देवखात-प्रस्रवणादीनां ग्रहणम्॥ १॥

दन्तान् प्रक्षाल्येत्युक्तम्। तच्च प्रक्षालनं दन्तकाष्ठेन दन्तानां

* वार्क्षञ्च, इति क पुस्तके पाठः।

परिशिष्टप्रकाशः ।

"आम्रपैलाशविल्वानामपामार्गशिरीषयोः ।
वाग्यतः प्रातरुत्थाय भक्षयेद् दन्तधावनम् ॥
खदिरश्च कदम्बश्च करवीरकरञ्जयोः ।
सर्वे कण्टकिनः पुण्याः क्षीरिणश्च विशेषतः"* ॥

पैलाश आम्रातकः । स्थूलता चास्य विष्णूक्ता । तथाहि,—

"कनीन्यग्रसमस्थौल्यं सकूर्चं द्वादशाङ्गुलम् ।
प्रातरुत्थाय यतवाक् भक्षयेद् दन्तधावनम्" ॥

सकूर्चमग्रस्थाने दलितम् । द्वादशाङ्गुलविधिश्च गोभिलीयव्यतिरिक्तानाम् । तेषामनेनैवाष्टाङ्गुलविधानात् ॥ २ ॥

---

प्रभा ।

शोधनपूर्व्वकमित्याह नारदाद्युक्तेति । नारदाद्युक्तवृक्षप्रभवमपाटितं त्वचा सहितं अष्टाङ्गुलं दन्तकाष्ठं स्यात् । तस्य काष्ठस्य अग्रप्रदेशेन दन्तान् प्रकर्षेण शोधयेत् । नारदः—

"आम्रपैलाशविल्वानामपामार्गशिरीषयोः ।
वाग्यतः प्रातरुत्थाय भक्षयेद्दन्तधावनम् ॥
खदिरश्च कदम्बश्च करवीरकरञ्जयोः ।
सर्व्वे कण्टकिनः पुण्याः क्षीरिणश्च यशस्विनः" ॥

पैलाश आम्रातकः । आदिपदात्,—

---

* यशस्विनः, इति ख पुस्तके पाठः ।

उत्थाय नेत्रे प्रक्षाल्य शुचिर्भूत्वा समाहितः।
परिजप्य च मन्त्रेण भक्षयेद् दन्तधावनम् ॥ ३ ॥

परिशिष्टप्रकाशः।

यथा दन्तकाष्ठं भक्षयेत्तदाह—

शय्याया उत्थायाक्षिणी प्रक्षाल्याचमनेन शुचिर्भूत्वा एकचित्तो-मन्त्रेणाभिमन्त्र्य दन्तशुद्ध्यर्थं काष्ठं भक्षयेत्। भक्षयेदिति पूर्व्वो-त्तरकालयोर्भक्षणधर्म्माचमनातिदेशात् गौणमग्निहोत्रशब्दवत्॥३॥

प्रभा।

"तिक्तं कषायं कटुकं सुगन्धि कण्टकान्वितम्।
क्षीरीणां वृक्षगुल्मानां भक्षयेद्दन्तधावनम्" ॥

इति।

"खदिरश्च कदम्बश्च करञ्जश्च तथा वटः।
तिन्तिड़ी वेणुपृष्ठश्च आम्रनिम्बौ तथैवच ॥
अपामार्गश्च विल्वश्च अर्कश्चोडुम्बरस्तथा।
एते प्रशस्ताः कथिता दन्तधावनकर्म्मसु" ॥

इति चैवमादिस्मृत्यन्तरोक्तस्यापि परिग्रहः ॥ २ ॥

उत्थायेति। शय्याया उत्थाय चक्षुर्द्वयं प्रक्षाल्य आचमनेन शुचि-र्भूत्वा वक्ष्यमाणेन मन्त्रेण दन्तधावनं भक्षयेत्। अत्र दन्तकाष्ठस्य वस्तुतो न भक्षणं किन्तु तेन दन्तशोधनमेव। तेन कुण्डपायिना-मयनेऽग्निहोत्रशब्दवदत्र भक्षिप्रयोगो गौणः तद्धर्म्मातिदेशार्थः। तेन भोजनवदत्रापि पुरस्तात् परस्ताच्च द्विराचमनं कर्त्तव्यम् ॥३॥

आयुर्बलं यशोवर्चः प्रजाः पशुवसूनि च ।
ब्रह्म प्रज्ञाञ्च मेधाञ्च त्वन्नोधेहि वनस्पते ॥ ४ ॥
यव्यद्वय*श्रावणादि सर्व्वानद्योरजस्वलाः ।
तासु स्नानं न कुर्वीत वर्जयित्वा समुद्रगाः ॥५॥

---

परिशिष्टप्रकाशः ।

मन्त्रमाह,—

नद्यादौ स्नायादित्यस्यापवादमाह ।

श्रावणादिमासद्वयं सर्व्वानद्यः समुद्रगेतरा अशुद्धा अतस्तासु न स्नायात् । यव्यो मासः । यव्यामासाः स्वमेकः संवत्सर इति शतपथश्रुतेः । समुद्रगाः साक्षात् न तु परम्परयाऽपि तथा सति सर्व्वासामेव तथात्वात् पर्युदासानुपपत्तेः । अतएव मनुः ।

"यथा नदीनदाः सर्व्वे समुद्रे यान्ति संस्थितिम्" ।

इति ॥ ४ ॥ ५ ॥

---

प्रभा ।

मन्त्रमाह आयुर्व्वलमिति ॥ ४ ॥

नद्यादौ स्नायादित्युक्तं, तस्यापवादमाह यव्यद्वयमिति । यव्यामासाः स्वमेकः संवत्सर इति श्रुतेः यव्यशब्दो मासवचनः । अत्यन्तसंयोगे द्वितीया । श्रावणादि मासद्वयं सर्व्वानद्यो रजस्वला भवन्ति, समुद्रगानदीर्वर्ज्जयित्वा । तासु रजस्वलासु नदीसु स्नानं न कुर्व्वीत । अत्र च समुद्रगा इत्यनेन साक्षात् समुद्र-

---

* मासद्वयं, इति पाठान्तरम् ।

धनुःसहस्राण्यष्टौ च गतिर्यासां न विद्यते।
न ता नदीशब्दवहा गर्त्तास्ते परिकीर्त्तिताः ॥६॥

परिशिष्टप्रकाशः।

नदीलक्षणमाह—

यासामपां धनुःसहस्राष्टकपरिमितदेशपर्य्यन्तं गमनं नास्ति

प्रभा।

गामिनीनामेव ग्रहणं, न तु परम्परया समुद्रगामिनीनामपि। तथात्वे सर्व्वासामेव नदीनां तथात्वात् वर्ज्जयित्वा समुद्रगा-इत्यनुपपत्तेः। यदाह मनुः—

"यथा नदीनदाः सर्व्वे समुद्रे यान्ति संस्थितिम्"।

इति। स्मरन्ति च।

"गङ्गा च यमुना चैव प्लक्षजाता सरस्वती।
रजसा नाभिभूयन्ते ये चान्ये नदसंज्ञकाः"॥

इति।

"गङ्गा धर्म्मद्रवी पुण्या यमुना च सरस्वती।
अन्तर्गतरजोयोगे सर्व्वास्वहःस्वेव निर्म्मलाः"॥

इति चैवमादि। अत्र च तासु इत्यधिकरणत्वेन निर्द्देशात् जलान्तरासम्भवे उद्धृततज्जलेन स्नानं न निषिद्धमिति प्रतीयते। अतएव व्याघ्रपादः—

"अभावे कूपवापीनामन्येनापि समुद्धृते।
रजोदुष्टेऽपि पयसि ग्रामभोगो न दुष्यति" ॥ ५ ॥

नदीलक्षणमाह धनुःसहस्राणीति। यासामपां अष्टौ धनुःसह-

उपाकर्म्मणि चोत्सर्गे प्रेतस्नाने तथैवच ।
चन्द्रसूर्य्यग्रहे चैव रजोदोषो न विद्यते ॥ ७ ॥

परिशिष्टप्रकाशः ।

न ता नदीशब्दवाच्याः किन्तु गर्त्तास्ते सर्व्वैर्मुनिभिरुक्ता इति । धनुःपरिमाणं हस्तचतुष्टयम् । तथाच विष्णुधर्म्मोत्तरप्रथमकाण्डम् ।

"द्वादशाङ्गुलिकः शङ्कुस्तद्दयञ्च शयः स्मृतः ।
तच्चतुष्कं धनुः प्रोक्तं क्रोशो धनुःसहस्रकः" ॥

शयोहस्तः ॥ ६ ॥

यच्चद्दयस्यापवादमाह,—

उपाकर्म्मादिषु रजोदोषो नास्ति ॥ ७ ॥

प्रभा ।

स्नाणि, कालाध्वनोरत्यन्तसंयोगे इत्यनेन द्वितीया । गतिर्नास्ति, ता आपो नदीशब्दवाच्या न भवन्ति । ते गर्त्ता मुनिभिः कथिताः । विधेयप्राधान्यविवक्षया ते इति पुंसा निर्देशः । धनुः परिमाणमाह विष्णुधर्म्मोत्तरप्रथमकाण्डम्—

"द्वादशाङ्गुलिकः शङ्कुः तद्दयन्तु शयः स्मृतः ।
तच्चतुष्कं धनुः प्रोक्तं क्रोशो धनुःसहस्रकः" ॥ ६ ॥

नदीनां रजोदोषस्यापवादमाह उपाकर्म्मणीति । उपाकर्म्म, प्रौष्ठपद्यां हस्तेनोपाकरणमिति गोभिलोक्तम् । उत्सर्गः, तैषीमुत्सृजन्ति इति गोभिलसूत्रोक्तएव । प्रसिद्धमन्यत् । उपाकर्म्मादिषु रजोदोषोनास्ति ॥ ७ ॥

वेदाश्छन्दांऽसि सर्व्वाणि ब्रह्माद्याश्च दिवौकसः।
जलार्थिनोऽथ पितरो मरीच्याद्यास्तथर्षयः॥ ८॥
उपाकर्म्मणि चोत्सर्गे स्नानार्थं ब्रह्मवादिनः।
यियासूननुगच्छन्ति संहृष्टाह्यशरीरिणः॥ ९॥
समागमस्तु यत्रैषां तत्रान्ये* बहवोमलाः।
नूनंऽसर्वे क्षयं यान्ति किमुतैकं नदीरजः॥ १०॥

---

परिशिष्टप्रकाशः।

हेतुमभिगदमाह—

उपाकर्म्मणि चोत्सर्गे च स्नानार्थं गच्छतोवेदाध्येतॄन् ऋषिदेवाद्या उक्ता जलार्थिनः संहृष्टा अदृश्या अनुगच्छन्ति।

तथाचैतेषां यत्र नदीजले समवायस्तत्र गुरुतराएव ब्रह्महत्यादयो बहवोदोषाः कार्त्स्न्येन नाशं यान्ति किमुतैकं लघु च नदीरज इति॥ ८॥ ९॥ १०॥

---

प्रभा।

उपाकर्म्मण्युत्सर्गे च रजोदोषाभावे हेतुवभिगदमाह वेदा इति त्रिभिः। ऋग्वेदादयोवेदाः गायत्र्यादीनि सर्व्वाणि एकविंशतिश्छन्दांसि ब्रह्मादयोदेवाः पितरः मरीच्यादय ऋषयश्च जलार्थिनः सन्तः सम्यक् हर्षयुक्ता अदृश्या भूत्वा उपाकर्म्मणि उत्सर्गे च स्नानार्थं गन्तुमिच्छून् वेदाध्येतॄन् अनुगच्छन्ति। यत्र

---

* तत्रैव, इति पाठान्तरम्।

ऋषीणां सिच्यमानानामन्तरालं समाश्रिताः।
संपिबेयुः शरीरेण पर्षन्मुक्तजलच्छटाः ॥ ११ ॥
विद्यादीन् ब्राह्मणः कामान् पुत्रादीन्नार्य्यपि ध्रुवान्।
आमुष्मिकाण्यपि सुखान्याप्नुयात् स न संशयः ॥१२॥

परिशिष्टप्रकाशः।

न केवलं रजोदोषनाशः किन्तु,—

उच्चैर्ऋषीनभिषिञ्चन्तीति वचनात् सिच्यमानानामृषीणां मध्यमाश्रितः सेककर्तृसमुदायमुक्तजलच्छटा यः शरीरेण प्रतीच्छेद्ब्राह्मणः, स विद्याधनादीन् कामानार्य्यपि प्रतीच्छन्ती पुत्रसौभाग्यादीन् स्थिरान् लभत इति अत्र न सन्देहः कार्य्यः ॥ ११ ॥ १२ ॥

प्रभा।

नदीजले एषां वेदादीनां समागमः तत्र अन्ये सर्व्वे ब्रह्महत्यादयो बहवो दोषाः निश्चितं नाशं यान्ति, तत्र एकं नदीरजः नाशं यातीति किमु वक्तव्यम् ॥ ८ ॥ ९ ॥ १० ॥

ऋषीणामिति। उपाकर्म्मणि उत्सर्गे च, उच्चैः ऋषीनभिषिञ्चेत् इति वचनात् उच्चैः ऋषीणामभिषेकः कर्त्तव्यः। तत्र च सिच्यमानानां ऋषीणां अन्तरालं मध्यं आश्रितः यः कश्चित् पर्षन्मुक्तजलच्छटाः सेककर्त्तृसमुदायमुक्तान् जलकणान् शरीरेण प्रतीच्छेत् गृह्णीयात्, स ब्राह्मणः विद्यादीन् कामानाप्नुयात् योषिदपि ध्रुवान् चिरस्थायिनः पुत्रादीन् कामानाप्नुयात् नात्र संशयः कार्य्यः ॥ ११ ॥ १२ ॥

अशुच्यशुचिना दत्तमाममृच्छकलादिना ।
अनिर्गतदशाहास्तु प्रेतारक्षांऽसि भुञ्जते ॥ १३ ॥
स्वर्धुन्यम्भःसमानि स्युः सर्व्वाण्यम्भांऽसि भूतले ।
कूपस्थान्यपि सोमार्कग्रहणे नात्र संशयः ॥ १४ ॥

दशमखण्डः ।

---

परिशिष्टप्रकाशः ।

प्रेतस्नाने रजोदोषाभावे हेतुमभिगदमाह—

अशुचिना मृतकाशौचवताऽपक्कमृण्मयकपालकादिना दत्तं जलं दातृपात्रयोरशुचित्वादशुच्येव यावद्दशाहसमाप्तिर्न भवति तावत्प्रेताभुञ्जते । तस्मात्प्रेतस्नाने तर्पणपर्य्यन्ते नदीरजो न दोषाय । रक्षांसीति प्रेतप्रसङ्गादुक्तम् । एतेनाममृच्छकलेनापि पिण्डादौ जलदाने न दोष इत्युक्तम् ॥ १३ ॥

यस्मात्सर्व्वाण्येव भूमिष्ठानि जलानि न पुनरुद्धृतानि सोमार्क-

---

प्रभा ।

प्रेतस्नाने रजोदोषाभावे हेतुमभिगदमाह अशुच्यशुचिना इति । अशुचिना मृतकाशौचवता अपक्कमृत्कपालादिना दत्तं, अतएव अशुचि जलं अनिर्गतदशाहाः प्रेता भुञ्जते । रक्षांसीति दृष्टान्तार्थम् । यतो मरणावधिदशाहपर्य्यन्तं प्रेता अशुचि जलमेव भुञ्जते अतः प्रेतस्नाने तर्पणपर्य्यन्ते रजोदोषो नास्तीत्यर्थः ॥ १३ ॥

चन्द्रसूर्य्यग्रहणे रजोदोषाभावे हेतुमभिगदमाह स्वर्धुन्यम्भः-

परिशिष्टप्रकाशः।

ग्रहणे गङ्गाजलसमानि। तस्माद्ग्रहणेऽपि रजोदोषाभावः। शेषं सुव्यक्तम्॥ १४॥

दशमः खण्डः।

इति महामहोपाध्यायश्रीनारायणकृते परिशिष्टप्रकाशे प्रथमः प्रपाठकः समाप्तः॥

---

प्रभा।

समानीति। चन्द्रसूर्य्यग्रहणे भूमिष्ठानि सर्व्वाणि अम्भांसि जलानि कूपस्थितान्यपि गङ्गाजलतुल्यानि भवन्ति अतो न तत्र रजोदोष इत्यभिप्रायः। भूमिष्ठजलानां गङ्गाजलसमत्ववचनात् उद्धृतजलानां न तथात्वम्॥ १४॥

इति दशमः खण्डः।

इति महामहोपाध्यायश्रीचन्द्रकान्ततर्कालङ्कारविरचितायां कर्म्मप्रदीपप्रभायां प्रथमः प्रपाठकः।

# अथ द्वितीयः प्रपाठकः ।

## प्रथमः खण्डः ।

अत ऊर्द्धं प्रवक्ष्यामि सन्ध्योपासनिकं विधिम् ।
अनर्हः कर्म्मणां विप्रः सन्ध्याहीनो यतः स्मृतः ॥ १ ॥

---

परिशिष्टप्रकाशः ।

प्रातःस्नानानन्तरं प्रातःसन्ध्यामाह—

अतः प्रातःस्नानानन्तरं सन्ध्योपासनस्यानुष्ठानं कार्त्स्न्येन वक्ष्यामि । यस्मात्सन्ध्याहीनो ब्राह्मणः कर्म्मणां नित्यनैमित्तिकादीनामनधिकारीति मुनिभिः स्मृतः ॥ १ ॥

---

प्रभा ।

इदानीं सन्ध्योपासनविधिं वक्तुमुपक्रमते अत ऊर्द्धमिति । यस्मात् सन्ध्योपासनरहितो ब्राह्मणः कर्म्मस्वनधिकारी, तस्मात् प्रातःस्नानादनन्तरं सन्ध्योपासनविधिं प्रकर्षेण वक्ष्यामि । उत्तरवाक्यगतो यच्छब्दः सामर्थ्यात् पूर्व्ववाक्ये तच्छब्दोपादानं मापेक्षते । अत्र चोपास्या देवता सन्ध्योच्यते । "अहरहः सन्ध्यामुपासीत" इति श्रुतेः । "सन्धौ सन्ध्यामुपासीत" इति स्मृतेश्च ।

प्रभा ।

सा चोपास्या देवता ब्रह्मैव । तथाच तैत्तिरीयाः समामनन्ति । "उद्यन्तमस्तं यन्तमादित्यमभिध्यायन् कुर्व्वन् ब्राह्मणो विद्वान् सकलं भद्रमश्नुते असावादित्यो ब्रह्मेति ब्रह्मैव सन् ब्रह्माप्येति य- एवं वेद" इति । प्राणायामादिकं कुर्व्वन् आदित्यमभिध्यायन् इत्यर्थः । मन्वाः क्रोशन्ति इति वदत्वादित्यशब्देनादित्यमण्डल- मध्यवर्त्ती परमात्मा भण्यते । स्थानेन स्थानिनो लक्षणात् । गायत्र्यर्थानुगमाच्च । स्मरन्ति च,—

"आदित्ये ब्रह्म इत्येषा निष्ठा ह्युपनिषत्स्वपि ।
छान्दोग्ये बृहदारण्ये तैत्तिरीये तथैवच" ॥

इति ।

"प्रणवव्याहृतिभ्याञ्च गायत्र्या त्रितयेन च ।
उपास्यं परमं ब्रह्म आत्मा यत्र प्रतिष्ठितः" ॥

इति चैवमादि । तथा,—

"न भिन्नां प्रतिपद्येत गायत्रीं ब्रह्मणा सह ।
सोऽहमस्मीत्युपासीत विधिना येन केनचित्" ॥

इति । "ॐकारो भगवान् विष्णुः" इत्यादिवद्वाच्यवाचकयो- रभेदादित्यभिप्रायः । गायत्रीप्रतिपाद्यः सूर्य्यमण्डलान्तर्गतः परमेश्वरोऽहमस्मीति, प्रत्यगात्मपरमात्मनोरभेदबुद्ध्योपासीते- त्यर्थः ॥ १ ॥

सव्ये पाणौ कुशान् कृत्वा कुर्यादाचमनक्रियाम्।
ह्रस्वाः प्रचरणीयाः स्युः कुशादीर्घाश्च वर्हिषः ॥२॥
दर्भाः पवित्रमित्युक्तमतः सन्ध्यादिकर्म्मणि।
सव्यः सोपग्रहः कार्य्यो दक्षिणः सपवित्रकः ॥३॥

---

परिशिष्टप्रकाशः।

सन्ध्याप्रवृत्तः प्रथमं वामहस्ते कुशान् कृत्वा आचमनानुष्ठानं कुर्य्यात्। यतो ह्रस्वाः कुशाः पार्व्वणपञ्चयज्ञादिकर्म्मानुष्ठानार्हाः, दीर्घाश्च स्तरणार्थं वर्हिषो भवन्ति, दर्भा एव अनन्तर्गर्भिणमित्यादि-लक्षणं पवित्रमित्युक्तम्। अतस्तदवस्थापन्नानां सर्व्वकर्म्मसूपयोगात् सन्ध्यादिकर्म्मस्वपि वामः करो बहुतरकुशसहितः, दक्षिणश्च पाणिः पवित्रकुशसहितः कार्य्य इति। अन्ये तु यतः कुशविशेषाणां तत्तत्कर्म्मसु विनियोगो न सन्ध्यादिकर्म्मसु। अतः सन्ध्यादिकर्म्म-स्ववस्थाविशेषशून्याः कुशाः पवित्रमित्युक्तमिति व्याचक्षते ॥२॥३॥

---

प्रभा।

सन्ध्योपासनविधिमाह सव्ये पाणाविति। वामहस्ते कुशान् गृहीत्वा आचमनं कुर्य्यात्। प्रसङ्गात् कुशान् विशिनष्टि ह्रस्वा-इति सार्द्धेन। ह्रस्वाः कुशाः प्रचरणीयाः पार्व्वणपञ्चयज्ञादि-कर्म्मानुष्ठानयोग्याः, दीर्घाः कुशा वर्हिषः स्तरणार्था इत्यर्थः। यतस्तत्तत्कर्म्मण्यवस्थाविशेषविशेषिताः कुशा विहिताः, अतः सन्ध्यादिकर्म्मण्यवस्थाविशेषरहिताः कुशाः पवित्रमित्युक्तं पूर्व्वा-चार्य्यैः। नात्र पवित्रपदेन अनन्तर्गर्भिणं सात्रमिति परिभाषितं

रक्षान्ते* वारिणात्मानं परिक्षिप्य समन्ततः ।
शिरसोमार्ज्जनं कुर्यात् कुशैः सोदकविन्दुभिः॥४॥

परिशिष्टप्रकाशः ।

आचमनान्ते आत्मानं जलेन वेष्टयित्वा रक्षा कार्य्येति शेषः । अनन्तरं कुशैर्जलविन्दुसहितैः शिरसोमार्जनं कुर्यादिति ॥ ४ ॥

प्रभा ।

पवित्रं ग्रहणीयं, किन्त्ववस्थाविशेषशून्यं कुशमात्रमित्यर्थः । सव्यो वामः करः सोपग्रहो बहुतरकुशयुक्तः, दक्षिणश्चानन्तरोक्त-पवित्रसहितः कार्य्यः ॥ २ ॥ ३ ॥

रक्षयेदिति । समन्ततो वारिणा परिवेष्ट्य आत्मानं रक्षयेत् । नारायणोपाध्यायेन तु रक्षान्ते इति पठितम् । आचमनान्ते आत्मानं जलेन परिवेष्ट्य रक्षा कार्य्येति व्याख्यातञ्च । अनन्तरं जलविन्दुसहितैः कुशैः शिरसो मार्ज्जनं कुर्य्यात् । अत्रादित एव मार्ज्जनोपदेशात् प्राणायामात् परमाचमनानन्तरं तदनुपदेशात् सन्ध्यासूत्रे चेदानीं तदनुपदेशात् प्राणायामात् परमाचमनानन्तरं तदुपदेशाच्चैतद्ग्रन्थानुसारादिदानीं वा सन्ध्यासूत्रानुसारात् प्राणायामात् परमाचमनानन्तरं वा मार्ज्जनं कार्य्यम् । सोऽयं विकल्पः । द्वयोरेव स्वशास्त्रत्वात् शिष्टाचारस्य चोभयथा दर्शनात् । केचित् किल शिष्टा इदानीमेव केचिच्च सन्ध्यासूत्रोक्त-क्रमेणैव मार्ज्जनमाचरन्तो दृश्यन्ते । अतएव सुबोधिनीकारा-

* रक्षयेत्, इति पाठान्तरम् ।

प्रणवोभूर्भुवःस्वश्च सावित्री च तृतीयिका ।
अब्दैवतस्तृचश्चैव चतुर्थः* इति मार्ज्जनम् ॥ ५ ॥

परिशिष्टप्रकाशः ।

मार्ज्जनमन्त्रमाह —

ॐकारो भूरादिव्याहृतित्रयं तृतीया च गायत्री चतुर्थं आपोहिष्ठेत्यादिऋक्त्रयमितीदं मार्ज्जनक्रियाकरणमित्यर्थः ॥ ५ ॥

प्रभा ।

दिभिरिदानीमेव माधवाचार्य्यप्रभृतिभिस्तु सन्ध्यासूत्रोक्तक्रम एव मार्ज्जनं लिखितम् ॥ ४ ॥

मार्ज्जनमन्त्रानाह प्रणव इति । तत्र तावत् प्रणव एको-मार्ज्जनमन्त्रः । व्याहृतित्रयमपरः । गायत्री चान्यः । अब्दैवत्य-मापो हिष्ठामयो भुव इत्यादि ऋक्त्रयमपरो मन्त्रः । तृतीयिका इति चतुर्थमिति चोपादानात् तथाऽवगतेः । तथाच प्रणवेनैकं, व्याहृतिभिरेकं, गायत्रैकं, आपोहिष्ठादिऋक्त्रयेण चैकं मार्ज्जनं कर्त्तव्यमिति पर्य्यवस्यति । अतएव,—

"ऋगन्ते मार्ज्जनं कुर्य्यात् पादान्ते वा समाहितः ।
आपोहिष्ठात्र्यचा कार्य्यं मार्ज्जनन्तु कुशोदकैः ॥
प्रतिप्रणवसंयुक्तं चिपेम्मूर्द्ध्नि पदे पदे ।
त्र्यचस्यान्तेऽथवा कार्य्यमृषीणां मतमीदृशम्" ॥

इति स्मृत्यन्तरे मार्ज्जने बहवः कल्पा उक्ताः । तत्र त्र्यचस्यान्ते इति च्छन्दोगविषयं, स्वशास्त्रानुग्रहात् ॥ ५ ॥

* अब्दैवत्यं तृचश्चैव चतुर्थं, इति पाठान्तरम् ।

भूराद्यास्तिस्र एवैता महाव्याहृतयोऽव्ययाः।
महर्ज्जनस्तपः सत्यं गायत्री शिरसा सह* ॥ ६ ॥
आपोज्योतीरसोऽमृतं ब्रह्म भूर्भुवःस्वरिति शिरः।
प्रतिप्रतीकं प्रणवमुच्चारयेदन्ते च शिरसः ॥ ७ ॥
एता एतां सहानेन तथैभिर्द्दशभिः सह।
त्रिर्जपेदायतप्राणः प्राणायामः स उच्यते ॥ ८ ॥

---

परिशिष्टप्रकाशः।

अनन्तरं प्राणायाममाह—

भूर्भुवःस्वरित्येता एव मार्ज्जनोक्ताः अव्ययमुक्तिफलत्वादव्यया महा-

---

प्रभा।

अथेदानीं प्राणायामं वक्तुं तन्मन्त्रानाह भूराद्या इति। भूर्भुवःस्वरित्येतास्तिस्र एव महाव्याहृतयोऽव्ययफलत्वादव्ययाः। महरादिचतुष्कमपि व्याहृतय एव। भूर्भुवःस्वर्महर्जनस्तपः सत्यमिति सप्त व्याहृतय इति सन्ध्यासूत्रात्। गायत्री शिरश्च ॥ ६ ॥

किमिदं शिरो नाम? तदाह आपोज्योतीरिति। एषु प्रत्यवयवमादौ, शिरस आदावन्ते च प्रणवमुदीरयेत्। तथाच सप्तानां व्याहृतीनामादौ सप्त प्रणवाः, गायत्र्या आदौ चैकः। शिरस आदावन्ते चेति मिलित्वा दश प्रणवा भवन्ति ॥ ७ ॥

सम्प्रति प्राणायाममाह एता इति। एताः सप्त व्याहृतीः

---

* गायत्री च शिरस्तथा, इति क पुस्तके पाठः।

परिशिष्टप्रकाशः।

व्याहृतयस्तिस्रोमहरादिचतुष्टयं च, तत्सवितुरिति गायत्री च, तथा आपोज्योतिरित्यादि शिरः। एतस्मिन् समुदाये प्रत्यवयवमादौ ॐकारमुच्चारयेत्। ततोभूरादिव्याहृतिसप्तकादौ सप्त प्रणवाः, गायत्र्यादौ चैकं, शिरसश्चादावन्ते च द्वयमित्येवं दश प्रणवाः। एताः सप्त व्याहृतीः एतां गायत्रीमनेन शिरसा सह तथैभिर्दशभिः प्रणवैः सह निरुद्धप्राणस्त्रिर्जपेत्। स प्राणायाम-उच्यते ॥ ६ ॥ ७ ॥ ८ ॥

---

प्रभा।

एतां गायत्रीं अनेन शिरसा सह, तथा एभिर्दशभिः प्रणवैः सह, नियमितप्राणः त्रिर्जपेत्। सोऽयं प्राणायामः कथ्यते। यद्यपि प्राणायामशब्दः प्राणस्यायमनमभिधातुमर्हति, तथापि तत्संबन्धाज्जपोऽपि प्राणायामः कथ्यते। प्राणायामः स उच्यते इत्यभिधानात् प्राणायामपदार्थोऽत्र परिभाष्यते। न त्वयं तत्कर्त्तव्यताबोधको विधिः। स तु "एवं त्रीन् कृत्वा सप्त वा षोड़श वाचामेत्"। इति सन्ध्यासूत्रादुपलब्धव्यः। तथाच प्राणायामत्रयमवश्यं कर्त्तव्यम्। स्मरन्ति च।

"प्राक्कूलेषु ततः स्थित्वा दर्भेषु च समाहितः।
प्राणायामत्रयं कृत्वा ध्यायेत् सन्ध्यामिति श्रुतिः" ॥

इति।

"प्राणायामत्रयं कार्य्यं सन्ध्यासु च तिसृष्वपि"।

इति चैवमादि बहुलम् ॥ ८ ॥

करेणोद्धृत्य सलिलं घ्राणमासज्य तत्र च ।
जपेदनायतासुर्वा त्रिः सकृद्वाऽघमर्षणम् ॥ ९ ॥
उत्थायार्कं प्रति प्रोहेत् त्रिकेणाञ्जलिमम्भसः ।
उच्चित्रमित्यृग्द्वयेन चोपतिष्ठेदनन्तरम् ॥ १० ॥

---

परिशिष्टप्रकाशः ।

अनन्तरञ्च —

हस्तेन जलमुद्धृत्य तत्र घ्राणमर्पयित्वा ऋतञ्चेत्याद्यघमर्षणं निरुद्धप्राणोऽनिरुद्धप्राणोवा सकृत्त्रिर्वा जपेदिति ॥ ९ ॥

अनन्तरञ्च—

उत्थितोभूत्वा प्रणवव्याहृतिसावित्र्यात्मकेन त्रिकेण सूर्य्याभिमुखं जलाञ्जलिं क्षिपेत् । अनन्तरम् उदुत्यं चित्रं देवानामिति ऋग्-द्वयेन चोपस्थानं कुर्य्यात् ॥ १० ॥

---

प्रभा ।

करेणेति । दक्षिणहस्तेन जलमुद्धृत्य तस्मिन् जले नासिकां लगयित्वा अनियमितप्राणो नियमितप्राणो वा वारत्रयमेकवारं वा ऋतञ्च सत्यञ्चेत्यादिऋक्त्रयात्मकमघमर्षणसूक्तं जपेत् ॥ ९ ॥

उत्थायेति । उत्थितो भूत्वा प्रणवव्याहृतिगायत्र्यात्मकेन त्रिकेण जलाञ्जलिमादित्यं प्रति क्षिपेत् । सन्ध्यासूत्रे अञ्जलित्रय-प्रक्षेपाभिधानादत्र चाञ्जलिमित्येकवचनसंयोगादनयोर्विकल्पः । अञ्जलित्रयं वा एकं वा अञ्जलिं क्षिपेदिति ।

सन्ध्याद्वयेऽप्युपस्थानमेतदाहुर्मनीषिणः*।
मध्ये त्वह्न उपर्य्यस्य विभ्राडादीच्छया जपेत् ॥११॥

परिशिष्टप्रकाशः।

पूर्व्वार्द्धं निगदव्याख्यातम्। मध्याह्ने प्रातःसन्ध्यायाञ्च विभ्राड्-बृहदित्यनुवाकं शिवसङ्कल्पं मण्डलब्राह्मणं पुरुषसूक्तं च इच्छया जपेत् न त्ववश्यमिति ॥ ११ ॥

प्रभा।

"कराभ्यां तोयमादाय गायत्र्या चाभिमन्त्रितम्।
आदित्याभिमुखस्तिष्ठन् त्रिरूर्द्ध्वं सन्ध्ययोः क्षिपेत् ॥
मध्याह्ने तु सकृदेवं क्षेपणीयं द्विजातिभिः"।

इति व्यासवचनोक्ता व्यवस्था तु गोभिलीयव्यतिरिक्तविषया। अत्र सामान्यत एवाञ्जलिमित्यभिधानात्। सूर्य्योपस्थाने मध्याह्ने विशेषाभिधानेनास्य सामान्यविषयत्वावगतेश्च। तदनन्तरं उदुत्यं जातवेदसमिति चित्रं देवानामिति च ऋग्द्वयेनादित्यस्योपस्थानं कुर्य्यात्। अत्राप्युत्थायेति वर्त्तते ॥ १० ॥

सन्ध्याद्वयेऽपीति। प्रातःसायंसन्ध्ययोरेवमुपस्थानं मनीषिणो-वदन्ति। अह्नो मध्ये मध्याह्नसन्ध्यायान्तु अस्योपस्थानस्योपरि पश्चात् विभ्राड् बृहदित्यादिकं दशतिसमाप्तिपर्य्यन्तं इच्छया जपेत्। एवमेव पाठः सर्व्वत्र दृश्यते। नारायणोपाध्यायेन तु मध्ये त्वह्न उदये चेति पठितं, मध्याह्ने प्रातःसन्ध्यायान्तु इति व्याख्यातञ्च। तच्चिन्तनीयम्। सन्ध्याद्वयेऽप्येवमुपस्थानमित्यनुपपत्तेः ॥ ११ ॥

* मेवमाहुः इति पाठान्तरम्।

तदसंसक्तपार्ष्णिर्वा एकपादर्द्धपादपि ।
कुर्यात्कृताञ्जलिर्वापि ऊर्द्ध्वबाहुरथापि वा ॥ १२ ॥
यत्र स्यात्कृच्छ्रभूयस्त्वं श्रेयसोऽपि मनीषिणः ।
भूयस्त्वं ब्रुवते तत्र कृच्छ्राच्छ्रेयो ह्यवाप्यते ॥ १३ ॥

परिशिष्टप्रकाशः ।

तत् उपस्थानं भूम्यलग्नगुल्फतलभागो भूमिष्ठैकचरणो भूमिष्ठार्द्ध-चरणोऽपि वा कुर्य्यात् । शेषं सुगमम् ॥ १२ ॥

गुरुलघुप्रयाससाध्यानां कथं विकल्प इत्यत्राह । प्रयासबाहु-ल्यात् फलभूयस्त्वमिति । अक्षरार्थो निगदव्याख्यात इति ॥ १३ ॥

प्रभा ।

तदिति । भूम्यलग्नगुल्फतलभागो वा भूमिलग्नैकचरणो वा भूमिलग्नचरणार्द्धो वा तदुपस्थानं कुर्य्यात् । तत्रापि कृताञ्जलिर्वा ऊर्द्ध्वबाहुर्वा कुर्य्यात् । अत्र सन्ध्यात्रयप्रक्रमे कृताञ्जलिर्वा ऊर्द्ध्व-बाहुर्व्वेति तुल्यवद्विकल्पाभिधानात्—

"सायंप्रातरुपस्थानं कुर्य्यात् प्राञ्जलिरानतः ।
ऊर्द्ध्वबाहुश्च मध्याह्ने तथा सूर्य्यस्य दर्शनात्" ॥

इति हारीतोक्ता व्यवस्था गोभिलीयव्यतिरिक्तविषया ॥ १२ ॥

लघुगुरुप्रयाससाध्यानामसंसक्तपार्ष्णित्वादीनां विकल्पमुपपा-दयति यत्रेति । यत्र प्रयासभूयस्त्वं तत्र श्रेयसोऽपि भूयस्त्वं मनीषिणो ब्रुवते । तत्र हेतुः कृच्छ्रादिति । यस्मात् प्रयासात्

तिष्ठेदोदयनात्पूर्वां मध्यमामपि शक्तितः।
आसीतोडूदयाच्चान्त्यां सन्ध्यां पूर्व्वत्रिकं जपन् ॥१४॥

परिशिष्टप्रकाशः।

अनन्तरञ्च—

पूर्व्वां संध्यां प्रणवमहाव्याहृतिसावित्रीरूपत्रिकं जपन्ना उदयात् सूर्य्योदयपर्य्यन्तं तिष्ठेत्। उत्थितो भवेदित्यर्थः। मध्यमामपि सन्ध्यां यथाशक्ति त्रिकं जपंस्तिष्ठेत्। पश्चिमान्तु आ उडूदयान्नक्षत्रदर्शनपर्य्यन्तं जपन्नासीत उपविष्टः स्यात्। पूर्वामित्यादिद्वितीयाऽत्यन्तसंयोगे तेन सन्ध्यारम्भः पूर्वो जपस्यावधिरिति सिद्धम् ॥ १४ ॥

प्रभा।

श्रेयः प्राप्यते तस्मात् प्रयासभूयस्त्वात् श्रेयसो भूयस्त्वं युक्तमिति भावः। भूयस्त्वं बाहुल्यम्। श्रेयः अभ्युदयम् ॥ १३ ॥

तिष्ठेदिति। पूर्व्वामित्यादौ सर्व्वत्रात्यन्तसंयोगे द्वितीया। पूर्व्वां सन्ध्यां पूर्व्वत्रिकं प्रणवमहाव्याहृतिगायत्रीरूपं जपन् आ उदयनात् सूर्य्योदयपर्य्यन्तं तिष्ठेदुत्थितो भवेत्। प्रातःसन्ध्यायामुत्थितः सन् सूर्य्योदयपर्य्यन्तं प्रणवमहाव्याहृतियुक्तां गायत्रीं जपेदित्यर्थः। एवमग्रेऽपि। मध्यमामपि सन्ध्यां पूर्व्वत्रिकं जपन् शक्तित उत्तिष्ठेत्। अशक्तौ त्वासीत। अन्त्यां सन्ध्यां पूर्व्वत्रिकं जपन् आ उडूदयात् नक्षत्रोदयपर्य्यन्तमासीत उपविष्टो भवेत्।

एतत्सन्ध्यात्रयं प्रोक्तं ब्राह्मण्यं यत्र तिष्ठति* ।
यस्य नास्त्यादरस्तत्र न स ब्राह्मण उच्यते ॥ १५ ॥

परिशिष्टप्रकाशः ।

एतत् सन्ध्यात्रयं कार्त्स्न्येनोक्तं यदधीनं ब्राह्मण्यम् । शेषं निगदव्याख्यातम् ॥ १५ ॥

प्रभा ।

"प्रणवं पूर्व्वमुच्चार्य्य भूर्भुवस्स्ततः परम् ।
गायत्री प्रणवश्चान्ते जपएवमुदाहृतः" ॥

इति योगियाज्ञवल्क्यवचनं गोभिलीयव्यतिरिक्तविषयम् ।

"प्रणवो भूर्भुवः स्वश्च सावित्री च तृतीयिका" ।

इति पूर्व्वमभिधानादत्र च पूर्व्वत्रिकमित्युक्तत्वाद् गोभिलीयानामन्ते प्रणवकल्पनानुपपत्तेः । न चान्ते प्रणवप्रयोगेपि प्रणवत्वेन द्वयोरैक्यादविरुद्धमिति तत्त्वकारोक्तं युक्तमिति वाच्यम् । अन्ते प्रणवस्य पूर्व्वमनुक्तत्वेन पूर्व्वत्रिकमित्यनुपपत्तेः । तावतापि व्यक्तीनां चतुष्कतया विरोधस्यापरिहाराच्च । पूर्व्वत्रिकमित्यनेन हि पूर्व्वोक्तं व्यक्तित्रयमेवोक्तमिति ध्येयम् । सन्ध्यासूत्रेऽपि ध्यानयुक्तमावर्त्तयेदोंपूर्व्वां गायत्रीमित्युक्तम् ॥ १४ ॥

उपसंहरति एतदिति । यत्र सन्ध्यात्रये ब्राह्मण्यमधिष्ठितं तदेतत् सन्ध्यात्रयं प्रकर्षेणोक्तं, तत्र सन्ध्यात्रये यस्यादरो नास्ति स ब्राह्मणो न कथ्यते मुनिभिः ॥ १५ ॥

* यदधिष्ठितम्, इति पाठान्तरम् ।

सन्ध्यालोपस्य चाकर्त्ता* स्नानशीलश्च यः सदा।
तं दोषानोपसर्पन्ति वैनतेयमिवोरगाः ॥ १६ ॥

प्रथमः खण्डः।

---

स्नानं सन्ध्यां च स्तौति—

निगदव्याख्यातम् ॥ १६ ॥

प्रथमः खण्डः।

---

प्रभा।

सन्ध्यालोपादिति। चकितः भीतः। सन्ध्यालोपस्य चाकर्त्ता,—इति पाठे व्यक्तोऽर्थः। गरुत्वन्तं गरुडम्। उरगाः सर्पाः। अतिरोहितार्थमन्यत् ॥ १६ ॥

इति प्रथमः खण्डः।

---

* सन्ध्यालोपाच्च चकितः, इति पाठान्तरम्।

## द्वितीयः खण्डः ।

वेदमादित आरभ्य शक्तितोऽहरहर्ज्जपेत् ।
उपतिष्ठेत्ततो रुद्रमर्वाग्वा वैदिकाज्जपात् ॥ १ ॥

---

परिशिष्टप्रकाशः ।

स्नानसूत्या यथाहनि तथा प्रातरित्यभिधानाच्च स्नानकर्त्तव्यता सूचिता, तदनन्तरं च स्मृत्यन्तरपर्य्यालोचनया मध्ये खङ्ग उदये च एतत्सन्ध्यात्रयं प्रोक्तमित्यनेन च सन्ध्योक्ता, तदनन्तरं क्रमप्राप्तं जपयज्ञमाह—

ऋगादिरूपं वेदं प्रथमकाण्डिकाया आरभ्य अध्यायं तदर्द्धादिरूपं यथाशक्ति प्रत्यहं जपेत् । ततो रुद्रमन्त्रै रुद्रं प्रकाशयेत् । उपपूर्वात्तिष्ठतेः प्रकाशनार्थत्वात् । उपान्मन्त्रकरणे इत्यनेन सूत्रेणात्मनेपदविधानात् । जपयज्ञात्पूर्वं वा रुद्रमुपतिष्ठेत । रुद्रोपस्थानमन्त्रश्च,—

"ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् ।
ऊर्द्ध्वलिङ्गं विरूपाक्षं विश्वरूपं नमो नमः" ॥ १ ॥

---

प्रभा ।

अथेदानीं जपयज्ञमाह वेदमिति । आदित आरभ्य प्रत्यहं यथाशक्ति वेदं जपेत् । वेदजपादनन्तरं पूर्व्वं वा रुद्रमुपतिष्ठेत । रुद्रोपस्थाने च,—

"ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् ।
ऊर्द्ध्वलिङ्गं विरूपाक्षं विश्वरूपं नमो नमः ॥

इति सम्प्रदायागतो मन्त्रः ॥ १ ॥

यवाद्भिस्तर्पयेद्देवान् सतिलाभिः पितॄनथ* ।
नामान्ते तर्पयामीति आदावोमिति च ब्रुवन् ॥ २ ॥

परिशिष्टप्रकाशः ।

अनन्तरं च तर्पणं क्रमप्राप्तमाह । अयञ्च क्रमो गोभिलीयव्यतिरिक्तानां वाजसनेयिप्रभृतीनां, गोभिलीयानां तु तर्पणोत्तरमेव जपयज्ञविधानम् । अतएव गोभिलेन नमो ब्रह्मण इत्युपजाय चेत्येवमन्तेनाग्निस्तृप्यतु इति च देवांस्तर्पयेदपसव्येन पाणिना राणायनो शटो कव्यवालादयो दिव्या यमांश्चाथाश्रीयांस्त्रीन् पितृतः त्रीन् मातृतः त्रीन् पत्न्याश्च पितृतर्पणं सनकादयश्च निवीतमिति मनुष्यधर्म्म इति तर्पणमुक्त्वा, उपस्थानं गायत्र्यष्टशतादीन् कृत्वा इत्यादिना यथाशक्त्यहरहर्ब्रह्मयज्ञ इति गोभिलीय इत्यन्तेन तर्पणानन्तरं ब्रह्मयज्ञ उक्तः । गोभिलीयेनापि ।

"आप्लवने तु संप्राप्ते तर्पणं तदनन्तरम् ।
गायत्रीं च जपेत्पश्चात्स्वाध्यायं चैव शक्तितः" ॥

प्रभा ।

अथ तर्पणमाह यवाद्भिरिति । यवसहिता आपो यवाप इति मध्यपदलोपी समासः । यवसहिताभिरद्भिर्देवान्, तिलसहिताभिरद्भिः पितॄन् तर्पयेत् । तर्पणवाक्यमाह नामान्ते इति । तर्पणीयानां नाम्नोऽन्ते तर्पयामीति आदौ च ओमिति ब्रुवन् तर्पयेत् । एवञ्च ॐ ब्रह्माणं तर्पयामीत्यादिरूपं तर्पणवाक्यमुक्तं भवति ॥ २ ॥

* सतिलाद्भिः पितॄनपि, इति ख पुस्तके पाठः ।

ब्रह्माणं विष्णुं रुद्रं प्रजापतिं वेदान् छन्दांसि देवान् ऋषीन् पुराणाचार्य्यान् संवत्सरं सावयवम् । देवीरप्सरसो देवानुगान् नागान् सागरान् पर्वतान् नगान् सरितो दिव्यान् मनुष्यानितरान् यक्षान् रक्षांसि सुपर्णान् पिशाचान् पृथिवीमोषधीं पशून् वनस्पतीन् भूतग्रामं चतुर्विधमित्युपवीती ॥ ३ ॥

---

परिशिष्टप्रकाशः ।

इति तर्पणानन्तरमेव जपयज्ञ उक्तः । अतएव तर्पणमपि नैतद्गोभिलीयानाम् । मनुष्याणां तर्पणं कुशमध्येनाञ्जलिद्वयेन च । तथाग्निपुराणम् ।

"प्रागग्रेषु सुरांस्तृप्येत् मनुष्यांश्चैव मध्यतः ।
पितॄंश्च दक्षिणाग्रेषु एकद्वित्रिजलाञ्जलीन्" ।

सयवाभिरद्भिर्देवान् सतिलाभिश्च पितॄंस्तर्पयेत् । तर्पणीयनामान्ते तर्पयामि नामादौ च ॐमिति ब्रुवन् । तेन ॐब्रह्माणं तर्पयामिति तर्पणवाक्यप्रयोग उक्तो भवतीति ॥ २ ॥

तर्पणीयानाह—

भूतग्रामं चतुर्विधमित्युपवीतीति, तर्पयेदिति शेषः ॥ ३ ॥

---

प्रभा ।

तर्पणीयानाह ब्रह्माणमित्यादिना । इत्युपवीतीति, एतानुपवीती सन् तर्पयेदित्यर्थः । सकृत् सकृदित्युत्तरवाक्यस्थमत्रापि

अथ प्राचीनावीती। यमं यमपुरुषं कव्यवालं नलं* सोमं यममर्य्यमणं तथा। अग्निष्वात्तान् सोमपान्† बर्हिषदः सकृत् सकृत् ॥ ४ ॥

अथ स्वान् पितॄन् मातामहादीनिति प्रतिपुरुषमभ्यसेत् ॥ ५ ॥

---

परिशिष्टप्रकाशः।

अत्रापि तर्पयेदिति शेषः ॥ ४ ॥

पितॄन् मातामहादीन् त्रीनित्युक्ततर्पणवाक्येन तर्पयेत्। प्रतिपुरुषञ्च तर्पणस्य त्रिरभ्यासः कर्त्तव्यः ॥ ५ ॥

---

प्रभा।

सिंहावलोकितन्यायेनानुषञ्जनीयम्। तेनैतान् सकृत् सकृत् तर्पयेत् ॥ ३ ॥

अथ प्राचीनावीतीति। अनन्तरं प्राचीनावीती भूत्वा यमादीन् सकृत् सकृत् तर्पयेत् ॥ ४ ॥

अथ स्वानिति। अथानन्तं प्राचीनावीत्येव स्वान् आत्मीयान् पितृपितामहप्रपितामहान् मातामहप्रमातामहवृद्धप्रमातामहांश्च तर्पयेत्। अत्र च प्रतिपुरुषमभ्यसेत् तर्पणम्। त्रीनिति सन्निहितत्वेन बुद्ध्यारोहात् प्रतिपुरुषं वारत्रयमभ्यासः कर्त्तव्यः ॥ ५ ॥

---

* कव्यवाडनलं, इति पाठान्तरम्। † सोमपीथान्, इति पाठान्तरम्।

ज्येष्ठभ्रातृश्वशुरपितृव्यमातुलांश्च मातामहपितृवंशौ च ॥ ६ ॥

ये चान्ये मत्त उदकमर्हन्ति तांस्तर्पयामीत्ययमवसानाञ्जलिः ॥ ७ ॥

अत्र श्लोकाः ।

क्वायां यथेच्छेच्छरदातपार्तः
पयः पिपासुः क्षुधितोऽत्तुमन्नम् ।

---

परिशिष्टप्रकाशः ।

अत्रापि तर्पयेदिति शेषः ॥ ६ ॥

अन्त्याञ्जलिरित्यर्थः । अत्रैकवचनादेक एवाञ्जलिः ॥ ७ ॥

---

प्रभा ।

ज्येष्ठेति । ज्येष्ठभ्रात्रादींश्च तर्पयेत् । ये चान्ये इत्ययमवसानाञ्जलिरन्त्याञ्जलिः । तदिदं तर्पणं प्रधानं पितृयज्ञरूपम् । स्नानसूत्रे यत्तर्पणमुक्तं, तत् स्नानाङ्गम् । तत्तु ब्रह्मयज्ञात् पूर्व्वमेतत्तु जपयज्ञादनन्तरमिति न विरोधः । परतश्चैतत् प्रवेदयिष्यामः ॥ ६ ॥ ७ ॥

तर्पणस्यावश्यकत्वप्रज्ञापणार्थं श्लोकानुदाहरति अत्र श्लोका इति ।

बालो जनित्रीं जननी च बालं
योषित्पुमांसं पुरुषश्च योषाम् ॥ ८ ॥
तथा सर्वाणि भूतानि स्थावराणि चराणि च।
विप्रादुदकमिच्छन्ति सर्वेऽभ्युदयकाङ्क्षिणः* ॥ ९ ॥

---

परिशिष्टप्रकाशः।

अथ श्लोका इत्यनेनात्र स्मृतिरितिवत् स्मृतिविशेषाभिधानम्। सर्वे तर्पणीयास्तर्पणकर्त्तुरभ्युदयमिच्छन्ति। शेषं सुव्यक्तम् ॥ ८ ॥ ९ ॥

---

प्रभा।

छायामिति। जनित्रीमिति छान्दसोऽयं प्रयोगः। जनयित्रीमित्यर्थः। निगदव्याख्यातमन्यत् ॥ ८ ॥

तथेति। यथाऽयं दृष्टान्तः, तथा स्थावराणि चराणि च सर्व्वाणि भूतानि विप्रादुकमिच्छन्ति। भूतशब्दः प्राणिवचनः। हि यस्मात् स विप्रः सर्व्वेषामभ्युदयस्य कर्त्ता। सर्व्वेऽभ्युदयकाङ्क्षिण इति पाठे सर्व्वे विप्रस्याभ्युदयमिच्छन्ति इति व्याख्येयम्। व्यत्ययात् पुंस्त्वम्। सर्व्वे ह्युदककाङ्क्षिण इति पाठे यस्मात् सर्व्वे उदककाङ्क्षिणस्तस्मात् विप्रादुदकमिच्छन्ति इति गतेन संबन्धः। अत्रापि पुंसा निर्देशः पूर्व्ववद्दर्णनीयः ॥ ९ ॥

---

* सर्व्वाभ्युदयकाङ्क्षिणः, इति पाठान्तरम्।

तस्मात् सदैव कर्त्तव्यमकुर्वन् महतैनसा।
युज्यते ब्राह्मणः कुर्वन् विश्वमेतद्विभर्त्ति हि ॥१०॥
अल्पत्वाद्धोमकालस्य बहुत्वात् स्नानकर्म्मणः।
प्रातर्न्न तनुयात् स्नानं होमलोपो हि गर्हितः ॥११॥

द्वितीयः खण्डः।

---

परिशिष्टप्रकाशः।

यस्मादुदकमिच्छन्ति तस्माद्विघातेच्छाजनितप्रत्यवायभिया सर्वदा नियमेन तर्पणं कार्य्यम्। एतदेव व्यक्तमाह। ब्राह्मणोऽकुर्वन् महता पापेन लिप्यते यस्मात् कुर्वन्नेतद्विश्वं पुष्णाति, अतोऽकरणे प्रत्यवायः ॥ १० ॥

यथाऽहनि तथा प्रातरित्यनेन मध्याह्नस्नानवद्विस्तरेण प्रातःस्नानं यदुक्तं तन्निरस्नेरेव साम्निस्तु प्रातःस्नानं न विस्तारयेत्। किन्तु संक्षेपेण कुर्य्यात्। संक्षेपश्च योगियाज्ञवल्क्येनोक्तः। तीर्थपरिकल्पनजलाभिमन्त्रणाचमनमार्ज्जनान्तर्ज्जलजपस्नानान्यघमर्षणसूक्तेन त्रिरावृत्तेनेत्येवं रूपः। तथाच,

---

प्रभा।

यस्मादेवं, तस्मादिति। तस्माद्ब्राह्मणेन सदैव तर्पणं कर्त्तव्यम्। तर्पणमकुर्व्वन् ब्राह्मणो महता पापेन युज्यते। कुर्व्वन् पुनरेतत् विश्वं विभर्त्तीति फलवादः ॥ १० ॥

अल्पत्वादिति। प्रातर्होमकालस्याल्पत्वात् स्नानकर्म्मणश्च

परिशिष्टप्रकाशः।

"स्नानमन्तर्जले चैव मार्जनाचमने तथा।
जलाभिमन्त्रणं चैव तीर्थस्य परिकल्पनम्॥
अघमर्षणसूक्तेन त्रिरावृत्तेन नित्यशः।
स्नानाचरणमित्येतत् समुद्दिष्टं महात्मभिः"॥

हेतुमाह। होमकालस्याल्पत्वात् स्नानकर्म्मणो बहुत्वात् विस्तारे होमकालातिक्रमात् यस्माद्धोमलोपो भवेत्, स च गर्हितः, तस्माद्धोमार्थं संक्षेपं कुर्य्यात्। ननु प्रातःस्नानं प्रातःकाले कर्त्तव्यं होमस्तूदितहोमिनामुदयानन्तरमिति स्नानविस्तारेऽपि न होमकालातिक्रमः। तस्मादनुदितहोमविषयमेवेदं वचनमिति युक्तम्। नैवं, उदितहोमिनामप्युदयात्पूर्व्वमग्निवितरणं विहितम्। तथाच गोभिलः। पुरोदयात्प्रातः प्रादुष्कृत्योदितेऽनुदिते वा प्रातराहुतिं जुहुयादिति। तथा, हस्तादूर्द्धं रविर्यावदित्यनेनाल्प एव होमकाल उक्तः। विस्तरेण च नद्यादौ स्नानं विहितम्। ततश्च स्नानविस्तरेण नद्यादित आगमनेन च सर्व्वमिदं लुप्येदिति तस्यापि स्नानसंक्षेपः। एवं

"पूर्व्वां सन्ध्यां सनक्षत्रामुपक्रम्य यथाविधि।
गायत्रीमभ्यसेत्तावद्यावदादित्यदर्शनम्॥

---

प्रभा।

बहुत्वात् प्रातःस्नानं न विस्तारयेत्। स्नानस्य विस्तारे हि होमकालात्ययात् होमलोपः स्यात्। स च विशेषेण निन्दितः। तदत्र

परिशिष्टप्रकाशः ।

पूर्व्वां सन्ध्यां जपंस्तिष्ठेत् सावित्रीमार्कदर्शनात् ।
पश्चिमां तु समासीनः सम्यगृक्षविभावनात्" ॥

सज्योतिर्ज्योतिषां दर्शनादित्यादिनरसिंहपुराणमनुगौतमादिभिर्यदुक्तं, तन्निरग्निविषयं द्रष्टव्यमिति ॥ ११ ॥

द्वितीयः खण्डः ।

---

प्रभा ।

प्रातःस्नानविस्तारनिषेधात् संक्षेपेण स्नानं कर्त्तव्यमित्युक्तं भवति । संक्षेपस्नानविधिश्च—

"स्नानमन्त्रजलञ्चैव तीर्थस्य परिकल्पनम् ।
जलाभिमन्त्रणञ्चैव मार्ज्जनाचमने तथा ॥
अघमर्षणसूक्तेन त्रिरावृत्तेन नित्यशः ।
स्नानाचरणमित्येतत् समुद्दिष्टं महात्मभिः" ॥

इति स्मृत्यन्तरादुपलब्धव्यः । होमलोपभयेन प्रातःस्नानविस्तारस्य निषेधात् यथाऽहनि तथा प्रातरित्यतिदेशोऽप्यग्निरग्निविषय इत्युक्तं भवति । एवं तुल्यन्यायात् तिष्ठेदोदयनात् पूर्व्वामित्याद्युपदेशोऽपि निरग्निविषयः प्रत्येतव्यः ॥ ११ ॥

इति द्वितीयखण्डः ।

## तृतीयः खण्डः ।

पञ्चानामथ सत्राणां महतामुच्यते विधिः ।
यैरिष्ट्वा सततं विप्रः प्राप्नुयात् सद्म शाश्वतम् ॥१॥

---

### परिशिष्टप्रकाशः ।

तर्पणान्तस्नानानन्तरं क्रमप्राप्तान् पञ्चयज्ञानाह—

अथ स्नानानन्तरं पञ्चानां महायज्ञानामनुष्ठानमुच्यते। यैर्देवादीन् सततं विप्रः पूजयित्वा स्थिरं स्थानं ब्रह्मलोकात्मकं प्राप्नोति। तथा ब्रह्मपुराणे।

"प्राजापत्यं ब्राह्मणानां स्मृतं स्थानं क्रियावताम्" ।

इति। नित्ये चानुषङ्गिफलमस्तीत्युक्तं भविष्यपुराणे।

"नित्यक्रियां तथा चान्येऽनुषङ्गफलां श्रुतिम्" ।

इति ॥ १ ॥

---

### प्रभा ।

पञ्चानामिति। अथेदानीं पञ्चानां महतां सत्राणां विधिरुच्यते यैः सत्रैः सततमिष्ट्वा ब्राह्मणः शाश्वतं स्थानं प्राप्नोति। स्मरन्ति च,

"प्राजापत्यं ब्राह्मणानां स्मृतं स्थानं क्रियावताम्" ।

इति ॥ १ ॥

देवभूतपितृब्रह्ममनुष्याणामनुक्रमात् ।
महासत्त्राणि जानीयात्तएव हि महामखाः ॥ २ ॥
अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम् ।
होमोदैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम् ॥ ३ ॥

---

परिशिष्टप्रकाशः ।

पञ्चानां देवतामाह—

अनुक्रमाद्वक्ष्यमाणानि । तएव महामखा इति संज्ञाविधिपरम् । शेषं निगदव्याख्यातम् ॥ २ ॥

अध्यापनं ब्रह्मदैवतो यज्ञः । एवं पितृयज्ञादावपि बोद्धव्यम् । दैवो भौत इति साऽस्य देवतेत्यनेन विहितो देवतातद्धितः ॥ ३ ॥

---

प्रभा ।

देवभूतेति । अनुक्रमाद्वक्ष्यमाणानि महासत्त्राणि देवादीनां जानीयात् । यानि महासत्त्राणि तएव महामखा महायज्ञाः । विधेयप्राधान्यविवक्षया पुंसा निर्देशः । तथाच देवयज्ञः भूतयज्ञः पितृयज्ञो ब्रह्मयज्ञो मनुष्ययज्ञश्चेति पञ्चयज्ञा भवन्ति ॥ २ ॥

तानेव पञ्चयज्ञान् विवृणोति अध्यापनमिति । दैवोभौत इति देवतार्थे तद्धितः । निगदव्याख्यातमन्यत् । पितृयज्ञस्तु तर्पणमिति तर्पणपदेन सन्निहितं स्वोक्तं तर्पणं परामृश्यते । व्यक्तिवचनानां सन्निहितव्यक्तिपरत्वस्य आग्नेयीन्याये सिद्धान्तितत्वात् । स्वोक्तं तर्पणमुपेक्ष्य परोक्ततर्पणपरिग्रहस्यान्याय्यत्वाच्च ॥ ३ ॥

श्राद्धं वा पितृयज्ञः स्यात्पित्र्यो बलिरथापि वा।
यश्च श्रुतिजपः प्रोक्तो ब्रह्मयज्ञः स उच्यते ॥ ४ ॥

परिशिष्टप्रकाशः।

श्राद्धं नित्यम्। एतेन त्रयाणां पितृयज्ञत्वादसम्भवे एकेनापि कृतेन पितृयज्ञक्रियानिष्पत्तेः प्रत्यवायः परिहृतो भवति। तथाच मनुः—

"यदेव तर्पयत्यद्भिः पितॄन् स्नात्वा द्विजोत्तमः।
तेनैव सर्वमाप्नोति पितृयज्ञक्रियाफलम्" ॥

समुच्चयेन तु त्रयाणामुपदेशः सम्भवे बोद्धव्यः। यश्च पूर्व्वं वेदमादित आरभ्य इत्यनेन श्रुतिजप उक्तः, सोऽपि ब्रह्मयज्ञ उच्यते। पूर्वं तस्य ब्रह्मयज्ञ इति संज्ञा नोक्ता, सैवेदानीं विधीयते। एतेन द्वौ ब्रह्मयज्ञावित्युक्तं भवति। अत्रापि सम्भवासम्भवाभ्यां विकल्पसमुच्चयौ पितृयज्ञवद्द्रष्टव्यौ। भट्टभाष्ये तु—

"गुरावध्ययनं कुर्व्वन् शुश्रूषादि यदाचरेत्।
स सर्वो ब्रह्मयज्ञः स्यात्तत्तपः परमुच्यते" ॥

इति वचनाद्ग्रहणार्थाध्ययनमपि ब्रह्मयज्ञ इत्युक्तम् ॥ ४ ॥

प्रभा।

श्राद्धं वेति। श्राद्धं नित्यश्राद्धम्। पित्र्यो बलिरिति। योऽयं बलिकर्म्मणि पित्र्यो बलिर्दीयते, स वा पितृयज्ञः स्यात्। तदेवं छन्दोगानां स्वशास्त्रोपदिष्टस्त्रिविधः पितृयज्ञो भवति, श्राद्धं तर्पणं पित्र्योबलिर्व्वेति। तदत्र कस्याञ्चिदवस्थायां अमीषां एकेनापि

स चार्वाक् तर्पणात् कार्य्यः पश्चाद्वा प्रातराहुतेः ।
वैश्वदेवावसाने वा नान्यत्रेति निमित्तकात् ॥ ५ ॥

---

परिशिष्टप्रकाशः ।

यः श्रुतिजपरूपो ब्रह्मयज्ञः स पितृयज्ञात्पूर्व्वं कार्य्यः । अत-एव तदनन्तरं यवाद्भिरित्यादिना तर्पणमुक्तम् । पश्चाद्वा प्रातरा-हुतेरिति अष्टधाविभक्तदिनस्य द्वितीयभागे दक्षोक्तोऽध्यापनात्मको-ब्रह्मयज्ञः कार्य्यः । तथाच दक्षः ।

---

प्रभा ।

कृतेन प्रत्यवायः परिहृतो भवति, समुच्चयेन सर्व्वेषां करणन्तु सति सम्भवे श्रेयम् । यश्चेति । वेदमादित आरभ्य इत्यनेन यः श्रुतिजपः पूर्व्वमुक्तः, स वा ब्रह्मयज्ञ उच्यते । तदेवं छन्दोगानां ब्रह्मयज्ञोऽपि स्वशाखापरिभाषितो द्विविधो भवति, अध्यापनं श्रुतिजपश्चेति । भट्टभाष्ये तु,

"गुरावध्ययनं कुर्व्वन् शुश्रूषादि यदाचरेत् ।
स सर्व्वो ब्रह्मयज्ञः स्यात् तत्तपः परमुच्यते" ॥

इति वचनात् गुरोरध्ययनं तदानीन्तनगुरुशुश्रूषादिकञ्च ब्रह्मयज्ञ इत्युक्तम् । व्यवस्था चामीषां पूर्व्वोक्तदिशा अव-सेया ॥ ४ ॥

स चार्व्वागिति । स च श्रुतिजपरूपो ब्रह्मयज्ञः तर्पणात्

परिशिष्टप्रकाशः।

"द्वितीये तु ततो भागे वेदाभ्यासो विधीयते।
वेदस्वीकरणं पूर्व्वं विचारोऽभ्यसनं जपः।
तद्दानञ्चैव शिष्येभ्यो वेदाभ्यासो हि पञ्चधा"॥

वैश्वदेवावसाने वा वामदेव्यजपरूपो ब्रह्मयज्ञः कार्य्यः। न च वामदेव्यजपस्य कर्म्माङ्गत्वात् न प्रधानब्रह्मयज्ञरूपतेति वाच्यम्। तर्पणवत् सम्भवात्। अतएव दधिखदिरादेः क्रत्वर्थस्यापि पुरुषार्थतया प्राधान्यम्। अतएव बल्यन्ते वामदेव्यगानान्तिको- यो जपः स ब्रह्मयज्ञ इति भट्टभाष्यम्। वाकारश्च व्यवस्थित- विकल्पपरो ब्रह्मयज्ञस्यैते वैकल्पिकाः कालाविभिन्नविषया-

---

प्रभा।

पूर्व्वं कर्त्तव्यः प्रातर्होमात् पश्चाद्वा वैश्वदेवावसाने वा कर्त्तव्य इत्युक्तकालत्रयरूपनिमित्तात् अन्यत्र न कर्त्तव्य इत्यादरार्थमुक्तम्। वैश्वदेवावसाने तु योऽयं ब्रह्मयज्ञः स बलिकर्म्म कृत्वैव कार्य्यः। बल्यन्ते वैश्वदेविके इति वचनात्। स चायं ब्रह्मयज्ञः वामदेव्य- गानरूप इति केचित्। वामदेव्यगानरूपोऽन्यश्च श्रुतिजप इत्यपरे। तदमी ब्रह्मयज्ञस्य त्रयः कालाः अनियमेन भवन्ति। अन्ये तु वाशब्दस्य व्यवस्थावाचित्वमङ्गीकुर्व्वन्तः तर्पणात् पूर्व्वं श्रुतिजपः, प्रातर्होमात्परमध्यापनं, वैश्वदेवावसाने तु वामदेव्यगानमिति वदन्ति। दक्षवचनमप्युदाहरन्ति,—

"द्वितीये तु तथा भागे वेदाभ्यासो विधीयते।

परिशिष्टप्रकाशः।

इत्यर्थः। इति कालरूपनिमित्तत्रितयं विना न ब्रह्मयज्ञः कार्य्यः। अत्र च कालोपदेशादेव नियमे सिद्धे यत् नान्यथेति नियमाभिधानं, तस्यायमभिप्रायः। ब्रह्मयज्ञस्य नित्यत्वात् कालस्य च तदङ्गत्वात् नित्ये च किञ्चित्त्यागेनाप्यनुष्ठानात् अनियमे प्राप्ते निमित्तत्वेन कालस्याधिकारिविशेषणत्वादितराङ्ग-वैलक्षण्यात् तद्व्यतिरेकेणानधिकारप्रत्यभिज्ञानाच्च नित्यप्रयोगाक्षेप-इति ॥ ५ ॥

---

प्रभा।

वेदस्वीकरणं पूर्व्वं विचारोऽभ्यसनं जपः।
तद्दानञ्चैव शिष्येभ्यः वेदाभ्यासो हि पञ्चधा" ॥

इति। अत्र किञ्चिद्वक्तव्यमस्ति। पितृयज्ञस्तु तर्पणमिति स्वोक्तमेव तर्पणं गृह्यते इत्युक्तमादावेव। स चार्व्वाक् तर्पणात् कार्य्य इत्यत्रापि स्वोक्तस्यैव पितृयज्ञरूपस्य तर्पणस्य परिग्रहः। प्रकृतप्रत्ययश्च न्याय्य इति शास्त्रतात्पर्य्यविदां वचनात्। सन्निहिते बुद्धिरन्तरङ्गेति न्यायात्। आग्नेयीन्यायाच्च। ब्रह्मयज्ञादिसाहचर्य्याच्चैतदेवं प्रतिपत्तव्यम्। तच्चैतदन्यादृशमेव तर्पणं प्रधानं पितृयज्ञरूपं ब्रह्मयज्ञानन्तरं कर्त्तव्यमत्रोक्तम्। स्नानग्रन्थे त्वन्यादृशमेव तर्पणं स्नानाङ्गं सूर्य्योपस्थानादनन्तरं करणीयमुक्तम्। तदनन्तरं गायत्रीजपो ब्रह्मयज्ञश्च तत्रोक्तः। उभयत्रैव प्रकरणात् प्राधान्यमङ्गत्वञ्च तर्पणस्य प्रतिपत्तव्यम्। तथा स्नानसूत्रपरि-शिष्टम्।

प्रभा।

"आप्लवने तु संप्राप्ते तर्पणं तदनन्तरम्।
गायत्रीञ्च जपेत् पश्चात् स्वाध्यायञ्चैव शक्तितः॥
आप्लवने तु संप्राप्ते गायत्रीं जपतः पुरा।
तर्पणं कुर्व्वतः पश्चात् स्नानमेव वृथा भवेत्"॥

तदत्र आप्लवने त्वित्युपक्रमात् स्नानमेव वृथा भवेदित्युपसंहाराच्च स्नानाङ्गतर्पणादनन्तरमेव गायत्रीजपो ब्रह्मयज्ञेति स्थिप्यते। तस्मात् स्नानाङ्गं तर्पणं ब्रह्मयज्ञात् पूर्व्वं, पितृयज्ञरूपं प्रधानतर्पणन्तु ब्रह्मयज्ञात् परं करणीयमित्यविरोधः। एतेनैतद्विषयभेदमपर्य्यालोचयता नारायणोपाध्यायेन तत्त्वकारेण च ब्रह्मयज्ञादनन्तरं तर्पणं वाजसनेयिनामिति यदुक्तं, तदसङ्गतं वेदितव्यम्। छन्दोगपरिशिष्टस्य च्छन्दोगेतरपरत्वकल्पनस्यान्याय्यत्वाच्च। यच्चापरमुक्तं तत्त्वकारेण, स्नानाङ्गतर्पणं प्रधानतर्पणस्य प्रकृतीभूतम्। तेन तस्यापि स्नानाङ्गतर्पणकालतैवेति। तदप्ययुक्तम्। द्वयोः सपरिकराभिहितयोः प्रकृतिविकारभावकल्पनानुपपत्तेः। स चार्व्वाक् तर्पणात् कार्य्य इति कालविधानेन कालान्तरकल्पनानुपपत्तेश्च। विस्तरेण चैतत् सर्व्वं गृह्यसूत्रभाष्ये विचारितमस्माभिस्तत्रैव तत् द्रष्टव्यम्। अत्र तावत् श्रुतिजपरूपो ब्रह्मयज्ञस्तर्पणादर्व्वाक् कार्य्य इत्युक्तम्। स्नानग्रन्थे तु स्नानाङ्गतर्पणात् परतः सामजपरूपो ब्रह्मयज्ञ उक्त इति कस्य केनाभिसंबन्ध इत्यप्यनुसन्धेयम्॥ ५॥

अप्येकमाशयेद्विप्रं पितृयज्ञार्थसिद्धये।
अदैवन्नास्ति चेदन्यो भोक्ता भोज्यमथापि वा ॥६॥
अप्युद्धृत्य यथाशक्ति किञ्चिदन्नं यथाविधि।
पितृभ्योऽथ मनुष्येभ्यो दद्यादहरहर्द्विजे ॥ ७ ॥

---

परिशिष्टप्रकाशः।

नित्यश्राद्धे ब्राह्मणत्रयासम्भवे यत्कार्य्यं तदाह—

एकमपि विप्रं बहूनामसम्भवे अदैवं वैश्वदेवश्राद्धरहितं भोजयेत्। पितृतृप्तिसिद्धये। न तु तर्पणबलिभ्यामेव पितृयज्ञो-निष्पन्न इति कृतकृत्यः स्यात्। स चातिथेरन्यो भोजयितव्यः। तथा बलिदानानन्तरं विष्णुपुराणम्—

---

प्रभा।

अप्येकमिति। यद्यपरो ब्राह्मणो भोक्ता न लभ्यते, यदि वा अनेकब्राह्मणतृप्तिपर्य्याप्तं भोज्यं द्रव्यं न विद्यते, तदा पितृयज्ञस्य योऽर्थः पितॄणां तृप्तिः, तत्सिद्धये एकमपि ब्राह्मणं भोजयेत्। एकस्मिन्नपि ब्राह्मणे नित्यश्राद्धं कुर्य्यादित्यर्थः। तच्च नित्यश्राद्धं दैवपक्षरहितं कर्त्तव्यम्। पितृयज्ञार्थसिद्धये इत्यनेनैतदुक्तं भवति, तर्पणपित्र्यबलिभ्यामेव पितृयज्ञं कृतं न मन्येत। किन्तु सति सम्भवे श्राद्धमप्यवश्यं कुर्व्वीतेति। ताभ्यां पितृयज्ञनिष्पत्तिस्तु कस्याञ्चिदेवावस्थायां भवति ॥ ६ ॥

अप्युद्धृत्येति। भोक्तुरलाभाद्भोज्यस्यापर्य्याप्तत्वाद्वा यद्येक-

परिशिष्टप्रकाशः।

"ततो गोदोहमात्रं हि कालं तिष्ठेद्गृहाङ्गने।
अतिथिग्रहणार्थाय तदूर्द्ध्वं वा यथेच्छया॥
अतिथिं तत्र संप्राप्तं पूजयेत् स्वागतादिना।
हिरण्यगर्भबुद्ध्या तं मन्येताभ्यागतं गृही"॥

एतदनन्तरं चोक्तं तत्रैव।

"पित्रर्थं चापरं विप्रमेकमप्याशयेन्नृप।
तद्देश्यं विदिताचारसम्भूतिं पाञ्चयज्ञिकम्"।

अपरमतिथेरन्यम्। अतिथेरविदिताचारसम्भूतित्वात् श्राद्धे पात्रत्वाभावात्। अतएवातिथ्याधिकारे देवलः—

"न पृच्छेद्गोत्रचरणं स्वाध्यायं देशजन्मनी।
भिक्षितो ब्राह्मणैरन्नं दद्यादेवाविचारयन्"॥

इति। पराशरः—

"न पृच्छेद्गोत्रचरणं स्वाध्यायं जन्म चैव हि।
स्वचित्तं भावयेत्तस्मिन् व्यासः स्वयमुपागतः"॥

तथा यमः—

"देशं गोत्रं कुलं विद्यामन्नार्थं यो निवेदयेत्।
वैवस्वतेषु धर्मेषु वान्ताशी स निरुच्यते"॥

---

प्रभा।

स्मिन्नपि ब्राह्मणे नित्यश्राद्धकरणं न सम्भवति, तदा पक्वादन्नात्

परिशिष्टप्रकाशः ।

यदि त्वथैकोऽप्यन्यस्तद्देश्यो नास्ति श्राद्धभोक्ता, भोज्यं वा ब्राह्मणद्वयतृप्तये पर्य्याप्तं नास्ति, तदा स्थाल्या अन्नमुद्धृत्य पितृभ्यो-मनुष्येभ्यश्च सनकादिभ्योऽतिथिद्विजे दद्यात्। उभयोः श्राद्धं कुर्य्यादित्यर्थः। एतेन मनुष्याणां नित्यश्राद्धं नास्तीति महार्णव-प्रकाशोक्तं निरस्तम्। अतएव कार्ष्णाजिनिः।

"दर्भांश्चैवासने दद्यान्न तु पाणौ कदाचन।
पितृदेवमनुष्याणामेवं तृप्तिर्हि शाश्वती" ॥
"नित्यश्राद्धं पितॄणां च मनुष्यैः सह गीयते"।

इति ब्रह्मपुराणम्। तथाच गृह्यान्तरम्। आत्मीयामभीष्टां देवतामुद्दिश्य प्राङ्मुखमतिथिं भोजयेत् मनुष्यार्थे इति। मनुष्य-श्राद्धे ब्राह्मणस्य प्राङ्मुखत्वे यजमानस्य श्राद्धभोक्तृब्राह्मण-सम्मुखावस्थानस्य औत्सर्गिकत्वात् न्यायप्राप्तमेव पश्चिमाभि-मुखत्वम्। तथाच सामवेदीयषड्विंशब्राह्मणम्। मनुष्याणां वा एषा दिक् या प्रतीचीति। तथा ज्योतिष्टोमे श्रूयते। प्राचीं देवा अभजन्त दक्षिणां पितरः प्रतीचीं मनुष्याः उदीचीं असुराः अपरेषामुदीचीं मनुष्या इति। अतिथ्यभावे भोज्यासम्भवे वा भिक्षादिकं दद्यात्। तेनापि पितृयज्ञनिष्पत्तिर्भवति। तथाच शातातपः।

---

प्रभा।

यथाशक्ति किञ्चिदप्यन्नमुद्धृत्य पितॄन् मनुष्यांश्च दिव्यान् सनकादी-

पितृभ्य इदमित्युक्त्वा स्वधाकारमुदीरयेत्।
हन्तकारं मनुष्येभ्यस्तदन्ते निनयेदपः ॥ ८ ॥

परिशिष्टप्रकाशः।

"भिक्षां वा पुष्कलं वापि हन्तकारमथापि वा।
असम्भवे सदा दद्यादुदपात्रमथापि वा ॥
ग्रासमात्रा भवेद्भिक्षा पुष्कलं तु चतुर्गुणम्।
पुष्कलानि तु चत्वारि हन्तकारं विदुर्बुधाः" ॥

इति। विष्णुपुराणञ्च—

"दद्याच्च भिक्षात्रितयं परिव्राड्ब्रह्मचारिणे।
इच्छया च नरो दद्याद्विभवे सत्यवारितम् ॥
इत्येतेऽतिथयः प्रोक्ताः प्रागुक्ता भिक्षवश्च ये।
चतुरः पूजयेन्नेतान् नृयज्ञर्णात् प्रमुच्यते" ॥

इति। दद्याच्चेति चकारः पूर्व्वोक्तातिथिभोजनेन समुच्चयार्थः। स च सम्भवे सति। असम्भवे तु भिक्षादानमात्रमेव शातातपवचनादिति ॥ ६ ॥ ७ ॥

यथाविधीति पूर्व्वसूक्तं विधिमाह। पितृभ्य इदमित्युक्त्वा

प्रभा।

मुद्दिश्य यथाविधि प्रत्यहं ब्राह्मणे दद्यात्। अस्मादवगम्यते सनकादीनामपि नित्यश्राद्धमस्तीति। स्मरन्ति च।

"नित्यश्राद्धमदैवं स्यान्मनुष्यैः सह गीयते"।

इति ॥ ७ ॥

यथाविधीत्युक्तम्। तमेव विधिमाह पितृभ्य इति। तदन्ते

परिशिष्टप्रकाशः ।

तदन्ते स्वधाशब्दमुच्चारयेत् । मनुष्येभ्य इदमन्नमित्युक्त्वाऽन्ते हन्त-शब्दम् । तदन्ते चापः क्षिपेत् अन्नोत्सर्गार्थमिति । यदा त्वत्तिथिरन्यो ब्राह्मणोऽस्ति तदा पार्व्वणेतिकर्त्तव्यतयैव बाधितेतरया श्राद्धं कर्त्तव्यम् । तथाच मत्स्यपुराणम्—

"नित्यं तावत् प्रवक्ष्यामि अर्घावाहनवर्ज्जितम् ।
अदैवं तद्विजानीयात् पार्वणं पर्व्वसु स्मृतम्" ॥

इति । लघुहारीतः—

"नित्यश्राद्धमदैवं स्यादर्घपिण्डादिवर्ज्जितम्" ।

एतच्च नित्यश्राद्धं षण्णाम् ।

"अप्येकं भोजयेद्विप्रं षण्णामप्यन्वहं गृही ।
अदत्त्वा: प्रहरन्त्यस्मै वक्त्रेणेति षडक्षिणा" ॥

इति वचनात् । तथा सपिण्डीकरणोत्तरश्राद्धाधिकारेऽनेनाप्युक्तं, कर्षूसमन्वितमित्यादि ॥ ८ ॥

---

प्रभा ।

मन्त्रपाठान्ते उदकमन्ने दद्यात् । सोऽयमन्नस्योत्सर्गः । निगद-व्याख्यातमन्यत् । स खल्वयं लघुर्नित्यश्राद्धप्रयोग इति प्राञ्चः ॥ ८ ॥

मुनिभिर्द्विरशनं प्रोक्तं विप्राणां मर्त्यवासिनान्नित्यम्।
अहनि च तथा तमस्विन्यां सार्द्धप्रथमयामान्तः* ॥८॥

परिशिष्टप्रकाशः।

सनकादिमनुष्यानुद्दिश्यातिथिभोजनं यदुक्तम्, तत्

"दिवातिथौ तु विमुखे गते यत् पातकं नृणाम्।
तदेवाष्टगुणं प्रोक्तं† सूर्य्यास्ते विमुखे गते॥
अप्रणोद्योऽतिथिः सायं सूर्य्यास्ते गृहमेधिनाम्।
काले प्राप्तस्त्वकाले वा नास्यानश्नन् गृहे वसेत्"॥

इति विष्णुपुराणमनुवचनाभ्यां सायमप्यतिथिभोजनोपदेशात् सनकादिमनुष्यानुद्दिश्य कर्त्तव्यम्। न तु

प्रभा।

ननु,—

"सायं प्रातर्मनुष्याणामशनं देवनिर्मितम्।
नान्तरा भोजनं कार्य्यमग्निहोत्रसमो विधिः"॥

इति बृहन्मनुवचने मनुष्याणां सायंप्रातरशनोपदेशात् सनकादीनामपि मनुष्यत्वात् रात्रावपि तदशनार्थं मनुष्यश्राद्धं कर्त्तव्यं भवति। अतएव,

"अप्रणोद्योऽतिथिः सायं सूर्य्यास्ते गृहमेधिनाम्।
काले प्राप्तस्त्वकाले वा नास्यानश्नन् गृहे वसेत्"॥

* सार्द्धप्रहरयामान्तः,—इति पाठान्तरम्।

† पूर्व्वं,—इति पाठान्तरम्।

परिशिष्टप्रकाशः ।

"पञ्चमे च ततो भागे संविभागो यथार्हतः ।
देवपितृमनुष्याणां कीटानां चोपदिश्यते" ॥

इति दक्षवचनात् दिवसपञ्चमभागमात्रे ।

"सायंप्रातर्मनुष्याणामशनं देवनिर्मितम् ।
नान्तरा भोजनं कार्य्यमग्निहोत्रसमो विधिः" ॥

इति छन्दोगमनुवचने मनुष्यपदेन सनकादीनामप्युपादानात् सायंभोजनावगमात् । इत्याशङ्कानिरासार्थमाह ।

मुनिभिर्म्मन्वादिभिर्यत् सायंप्रातर्मनुष्याणां द्विरशनमुक्तं,

---

प्रभा ।

इति मनुना सायमप्यतिथिभोजनमुक्तम् । तच्चैतत् सनकादीनुद्दिश्य कर्त्तव्यमित्यायाति । तदिदमाशङ्क्याह मुनिभिरिति ।

मुनिभिर्म्मन्वादिभिर्विप्राणां यत् नित्यं द्विरशनमुक्तं, तन्मर्त्त्यवासिनां न तु दिव्यानां सनकादीनाम् । तदनेन सायमवश्यं कर्त्तव्यमप्यतिथिभोजनं न सनकादीनुद्दिश्य कर्त्तव्यमित्युक्तं भवति । अशनद्वयस्य कालमाह अह्नीति । तमस्विन्यां सार्द्धप्रथमयामान्तरित्येकं वाक्यम् । तमस्विन्यां रात्रौ । अर्द्धेन सहितः प्रथमप्रहरः सार्द्धप्रथमयामः, तदन्तः तन्मध्ये न तु तत्परतोऽपि । स्मरन्ति च ।

"षण्मुहूर्त्ते व्यतीते तु रात्रौ प्रोक्ता महानिशा ।
लभते ब्रह्महत्याञ्च तत्र भुक्त्वा च नारद" ॥

सार्द्धप्रहरयामान्तरिति पाठे अर्द्धप्रहरेण सहितो याम इति

सायंप्रातर्वैश्वदेवः कर्त्तव्यो बलिकर्म्म च।
अनश्नताऽपि सततमन्यथा किल्बिषी भवेत् ॥ १० ॥

परिशिष्टप्रकाशः।

तन्मर्त्यवासिनां विप्राणां न दिव्यानां सनकादीनाम्। अहनि च तथा इत्युत्तरार्द्धेन सायंप्रातःशब्दौ रात्रिदिनपरावित्युक्तम्। अत्र दिवसस्य पञ्चमभागो भोजनकालत्वेन दक्षोक्त एव। रात्रेस्तु भागव्यवस्थामाह सार्द्धप्रथमयामान्तः, न तदूर्द्धमिति ॥ ९ ॥

अक्षरार्थौ निगदव्याख्यात एव, तात्पर्य्यं त्विदम्*। पञ्चमे च तथा भागे इति दक्षवचनात्। तथा—

प्रभा।

तथैवार्थः। तत्र च प्रथमातिक्रमे कारणाभावात् यामशब्दः प्रथमयामपरो मन्तव्यः। दिवाभोजने त्वहर्मात्रोपादानेऽपि दक्षोक्तः पञ्चमयामार्द्धरूपः कालः प्रशस्ततया आदरणीयः। यद्यपि रात्रौ श्राद्धकरणं सामान्यत एवाननुज्ञातं, तथापि सनकादीनुद्दिश्यातिथिभोजनस्योपदेशात् रात्रौ चातिथिभोजनस्यावश्यकत्ववचनात् तत्र तदुद्देशोऽपि स्यादित्यधिकाशङ्कानिरासार्थमिदमुक्तम्। नित्यश्राद्धन्तु रात्रौ न भवतीति स्थितमेव ॥ ९ ॥

किन्तु सायंप्रातरिति। स्वयमभुञ्जतापि सायंप्रातर्वैश्वदेवबलिकर्म्मणी सततं कर्त्तव्ये। तदकरणे तु पापी भवतीति। यत्तु, अनश्नता अतिथ्याद्यनुरोधेन पाकसम्भव एव सायमिति बोध्यम्।

* तात्पर्य्यन्तु व्याख्यायते, इति पाठान्तरम्।

परिशिष्टप्रकाशः ।

"देवानृषीन्मनुष्यांश्च पितॄन् गृह्याश्च देवताः ।
पूजयित्वा ततः पश्चाद्गृहस्थः शेषभुग्भवेत् ॥
अदत्वा तु य एतेभ्यः पूर्वं भुंक्तेऽविचक्षणः ।
भुञ्जानो न स जानाति श्वगृध्रैर्ज्जग्धिमात्मनः ॥"

इति मनुवचनाच्च भुञ्जानेन सकृत् वैश्वदेवबलिकर्म्मणी कर्त्तव्ये इत्याशङ्कानिरासार्थं सायंप्रातरनश्नतापीत्युक्तम् । किन्त्वियान्

प्रभा ।

"पुनः पाकमुपादाय सायमप्यवनीपते ।
वैश्वदेवनिमित्तं वै पत्न्या सार्द्धं बलिं हरेत्" ॥

इति विष्णुपुराणे पुनः पाकमुपादाय सायमित्यभिधानात् । तेन स्त्रीयभोजनसम्भवे पाकं विनापि तदसम्भवे पाकसत्त्वएव रात्रौ वैश्वदेवबलिकर्म्मणी दिवा तु सर्व्वथैवेति तत्त्वकृद्भिरुक्तम् । तदसङ्गतम् । उपादायेत्यस्य कृत्वेत्यर्थस्याश्रुतपूर्व्वस्य वर्णनीयत्वात् । कल्पनायाः प्रमाणाभावाच्च । किञ्च । स्त्रीग्रभोजनसम्भवे पाकं विनापीत्यस्यां कल्पनायां पुनः पाकमुपादायेत्यस्य, स्त्रीयभोजनासम्भवे त्वतिथ्याद्यनुरोधेन पाकसत्त्वएवेत्यस्याञ्च कल्पनायां अनश्नतापि सततमित्यस्योपरोधः स्यात् । तदेवं तदुक्तकल्पनायां वचनद्वयमपि कदर्थितं भवेत् । तस्मात् पुनः पाकमुपादायेति मुख्यकल्पाभिप्रायेण वचनं वर्णनीयम् । सर्व्वसामञ्जस्यात् । न त्वितरपरिसंख्यानार्थम् । वाक्यभेदापत्तेः । वैश्वदेवबलिकर्म्मणोः

परिशिष्टप्रकाशः।

विशेषः अग्रतोऽकरणे प्रत्यवायद्वयम्। भोजनकृतमकरणकृतञ्च। अनग्रतस्त्वकरणमात्रकृतम्। अतएवान्यथा किल्बिषी भवेदित्याह ॥ १० ॥

---

प्रभा।

पुरुषार्थतया तदर्थं पाकस्य सर्व्वथैव न्याय्यत्वाच्च। मुख्यकल्पासम्भवे त्वनुकल्पः स्थित एव। स्मरन्ति च।

"सायं त्वन्नस्य सिद्धस्य पत्न्यमन्त्रं बलिं हरेत्"।

इति। वस्तुतस्तु पाकं पक्कमन्नमुपादाय सायमपि पुनर्बलिं हरेदिति वचनार्थः। प्रधानक्रियान्वयस्याभ्यर्हितत्वात्। अनयैव रीत्या,

"चतुर्थ्यामुदितश्चन्द्रो नेक्षितव्यः कदाचन"।

इत्यत्र चतुर्थ्यां नेक्षितव्य इत्यन्वयस्तैरभ्युपगतः। अथवा। सायमपि वैश्वदेवनिमित्तं पाकमुपादायेति विष्णुपुराणवचनस्यार्थोऽकामेनापि वाच्यः। अन्यथा वैश्वदेवनिमित्तमित्यस्यान्यत्रान्वयासम्भवादनर्थकत्वापत्तेः। तस्मात् वैश्वदेवनिमित्तं पाकस्य सुव्यक्तमुपदेशात् तत्त्वकृतां कल्पना सर्व्वथैवासमीचीना। तदत्र वैश्वदेवनिमित्तमित्युपादानात् वैश्वदेवादनन्तरं बलिहरणोपदेशाच्च वैश्वदेवोऽपि सायं कर्त्तव्य इत्युक्तं भवति। नारायणोपाध्यायेनापि अग्रतोऽकरणे प्रत्यवायद्वयं भोजनकृतमकरणकृतञ्च अनग्रतस्त्वकरणमात्रकृतमित्युक्तमित्यस्तु किं विस्तरेण ॥ १० ॥

अमुष्मै नम इत्येवं बलिदानं विधीयते ।
बलिदानप्रदानार्थं नमस्कारः कृतो यतः ॥ ११ ॥

---

परिशिष्टप्रकाशः ।

यत्प्रथमं निदधाति स पार्थिवो बलिर्भवति, अथ यद्द्वितीयं स वायव्यो यत्तृतीयं स वैश्वदेव इत्यादिना सूत्रेण तत्तद्देवतोद्देशेन बलिदानमुक्तम् । मन्त्रस्तु नोक्तस्तमाह ।

अमुष्मै इत्यनेन पृथिव्यादीनामुपादानम् । तेन पृथिव्यै नम-

---

प्रभा ।

यत् प्रथमं निदधाति स पार्थिवो बलिर्भवति इत्यादिना गोभिलेन बलिदेवता उक्ताः बलिमन्त्रस्तु नोक्तः, तमाह अमुष्मै इत्यादि ।

अमुष्मै नम इत्येवं प्रकारेण बलिदानं क्रियते । नमस्कारेण बलिदानकरणे हेतुमाह बलिदानेति । दानपदं कृदभिहित-भावतया दीयमानपरम् । तथाच यस्मात् दीयमानबलिप्रदानार्थं नमस्कारः कृतः, तस्मात् अमुष्मै नम इत्येवं प्रकारेण बलिदानं क्रियते इति समुदितार्थः । प्रदीयते अनेनेति प्रदानं मन्त्र इति तत्त्वकाराः । प्रमाणार्थमिति पाठे प्रमाणपदं मन्त्रपरमिति नारायणोपाध्यायाः ।

तदत्र, अमुष्मै इति देवतानिर्देशः । स्मरन्ति च ।

"अदःपदं हि यद्रूपं यत्र मन्त्रे हि दृश्यते ।
साध्याभिधानं तद्रूपं तत्र स्थाने नियोजयेत्" ॥

परिशिष्टप्रकाशः।

इत्यादिपदद्वयात्मकमन्त्रप्रयोग उक्तो भवति। नमो ब्रह्मण इति

---

प्रभा।

इति। इत्येवमित्यत्र, इतिः पूर्व्वोक्तपदद्वयपरामर्शार्थः। एवमिति क्रमार्थम्। एवञ्च पृथिव्यै नमः इत्यादिरूपो बलिमन्त्रः सिध्यति। प्रदानार्थपदानां स्वधाकारादीनामन्तएव प्रयोगस्य प्रायशो-दर्शनाच्चैतदेवं प्रतिपत्तव्यम्। अतएव स्वधाकारेण निर्वपेदित्यादि वक्ष्यति।

अत्र च नमः पृथिव्यै इत्यादिर्नमस्कारादिर्मन्त्रो न तु तदन्तः। नमो ब्रह्मणे इति वास्तुबलौ विकृतौ तथा दर्शनात्। वैकृतवचनेनापि च अर्च्चिनो दीपयन्ति इत्यादिना प्रकृतौ भागव्यवस्थाया दृष्टत्वात्। असुष्मै नम इति न क्रमपरं, किन्तु असुष्मै नम इत्युभयमुक्त्वा बलिदानं विधत्ते। अन्यथा परिशिष्ट-सूत्रविरोधापत्तेरिति परिशिष्टप्रकाशः।

वयन्तु पश्यामः। इत्येवं बलिदानमिति शब्देन क्रमस्योक्त-त्वात् वैकृतदृष्टक्रमकल्पनाया अवसर एव नास्ति। यत्र हि प्रकृतौ किमपि नोपदिश्यते, तत्रैव विकृतौ दृष्टं परिकल्प्यते। इह तु प्रकृतौ विशेषोपदेशात् आकाङ्क्षैव नोदेति कैवावसरो विकृति-परिदृष्टकल्पनायाः। न च परिशिष्टसूत्रयोर्विरोधः। परिशिष्टस्य प्राकृतबलिविषयत्वात् सूत्रस्य च वैकृतबलिविषयत्वात् अनयो-र्विरोधशङ्काऽनवसरात्। किञ्च परिशिष्टकारः स्वल्पयमस्पष्टानां

| | | | |
|---|---|---|---|
| *Mīmāṁsā Darçana, Fasc. 6-19 @ /10/ each ... ... | Rs. | 8 | 12 |
| Nyāyavārtika, Fasc. 1-6 @ /10/ each ... ... ... ... | | 3 | 12 |
| *Nirukta, Vol. IV, Fasc. 1-8 @ /10/ each ... ... ... | | 5 | 0 |
| *Nītisara, Fasc. 2-5 @ /10/ each ... ... ... ... | | 2 | 8 |
| Nityācārapaddhatiḥ, Fasc. 1-7 @ /10/ each ... ... ... | | 4 | 6 |
| Nityācārapradīpaḥ Vol. I, Fasc. 1-8; Vol. II, Fasc. 1. @ /10/ each ... | | 5 | 10 |
| Nyayabinduṭīkā, Fasc. 1 @ /10/ each ... ... ... | | 0 | 10 |
| *Nyāya Kusumāñjali Prakaraṇa Vol. I, Fasc. 2-6; Vol. II, Fasc. 1-3 @ /10/ each ... ... ... ... ... | | 5 | 0 |
| Padumawati, Fasc. 1-5 @ 2/ ... ... ... ... | | 10 | 0 |
| Pariçiṣṭa Parvan, Fasc. 3-5 @ /10/ each ... ... ... | | 1 | 14 |
| Prākrita-Paingalam, Fasc. 1-7 @ /10/ each ... ... ... | | 4 | 6 |
| Prithivirāj Rāsa, Part II, Fasc. 1-5 @ /10/ each ... ... ... | | 3 | 2 |
| Ditto (English) Part II, Fasc. 1 @ 1/- ... ... ... | | 1 | 0 |
| Prākrita Lakṣaṇam Fasc. 1 @ 1/8/ each ... ... ... ... | | 1 | 8 |
| Parāçara Smṛti, Vol. I, Fasc. 1-8; Vol. II, Fasc. 1-6; Vol. III, Fasc. 1-6 @ /10/ each ... ... ... ... ... | | 12 | 8 |
| Parāçara, Institutes of (English) @ 1/- each ... ... ... | | 4 | 0 |
| Prabandhacintāmaṇi (English) Fasc. 1-3 @ 1/4/ each ... ... | | 3 | 12 |
| Saddarsana-Samuccaya, Fasc. 1-4 @ /10/ each ... ... ... | | 1 | 4 |
| *Sāma Vēda Saṁhitā, Vols. I, Fasc. 7-10; II, 1-6; III, 1-7; IV, 1-6; V, 1-8, @ /10/ each ... ... ... ... | | 19 | 6 |
| Sāṅkhya Sūtra Vṛtti, Fasc. 1-4 @ /10/ each ... ... ... | | 2 | 8 |
| Ditto (English) Fasc. 1-3 @ 1/- each ... ... | | 3 | 0 |
| *Sankara Vijaya, Fasc. 2-3 @ /10/ each ... ... ... | | 1 | 4 |
| Srāddha Kriyā Kaumudī, Fasc. 1-6 @ /10/ each ... ... ... | | 3 | 12 |
| Sragdharā stotra (Sanskrit and Tibetan) ... ... ... ... | | 2 | 0 |
| Srauta Sutra Latyayana, Fasc. 1-9 @ /10/ each ... ... ... | | 5 | 10 |
| " " Asbalayana, Fasc. 4-11 @ /10/ each ... ... ... | | 5 | 0 |
| Suçruta Saṁhitā, (Eng.) Fasc. 1 @ 1/- each ... ... ... | | 1 | 0 |
| Suddhikaumudī, Fasc. 1-4 @ /10/ each ... ... ... ... | | 2 | 8 |
| *Taittreya Brahmana, Fasc. 6-25 @ /10/ each ... ... ... | | 12 | 8 |
| " Pratisakhya, Fasc. 1-3 @ /10/ each ... ... ... | | 1 | 14 |
| *Taittirīya Saṁhitā, Fasc. 27-45 @ /10/ each ... ... ... | | 11 | 14 |
| Tāṇḍya Brāhmaṇa, Fasc. 7-19 @ /10/ each ... ... ... | | 6 | 14 |
| Tantra Vārtaka (English) Fasc. 1-6 @ 1/4/ each ... ... | | 7 | 8 |
| Tattva Cintāmaṇi, Vol. I, Fasc. 1-9, Vol. II, Fasc. 2-10, Vol. III, Fasc. 1-2, Vol. IV, Fasc. 1, Vol. V, Fasc. 1-5, Part IV, Vol. II, Fasc. 1-12 @ /10/ each | | 23 | 12 |
| Tattvārthadhigama Sutram, Fasc. 1-3 @ /10/ each ... ... ... | | 1 | 14 |
| Trikāṇḍa-Maṇḍanam, Fasc. 1-3 @ /10/ each ... ... ... | | 1 | 14 |
| Tul'si Satsai, Fasc. 1-5 @ /10/ each ... ... ... ... | | 3 | 2 |
| Upamita-bhava-prapañca-kathā, Fasc. 1-11 @ /10/ each ... ... | | 6 | 14 |
| Uvāsagadasāo, (Text and English) Fasc. 1-6 @ 1/- each ... ... | | 6 | 0 |
| Vallāla Carita, Fasc 1 @ /10/ ... ... ... ... | | 0 | 10 |
| Varṣa Kriyā Kaumudī, Fasc 1-6 @ /10/ each ... ... ... | | 3 | 12 |
| *Vāyu Purāṇa, Vol. I, Fasc. 3-6; Vol. II, Fasc. 1-7, @ /10/ each ... | | 6 | 14 |
| Vidhāna Pārijata, Fasc. 1-8 Vol. II. Fasc. I @ /10/ each ... ... | | 5 | 10 |
| Vivādaratnākara, Fasc. 1-7 @ /10/ each ... ... ... | | 4 | 6 |
| Vṛhat Svayambhū Purāṇa, Fasc. 1-6 @ /10/ each ... ... ... | | 3 | 12 |
| *Yoga Aphorisms of Patanjali, Fasc. 3-5 @ /10/ each ... ... | | 1 | 14 |
| Yogaśāstra of Hemchandra Vol. I. Fasc. 1. (200 pages.) ... ... | | 1 | 4 |

*Tibetan Series.*

| | | |
|---|---|---|
| Pag-Sam Thi S'iñ, Fasc. 1-4 @ 1/ each ... ... ... ... | 4 | 0 |
| Sher-Phyin, Vol. I, Fasc. 1-5; Vol. II, Fasc. 1-3; Vol. III, Fasc. 1-6, @ 1/ each | 14 | 0 |
| Rtogs brjod dpag Akhri S'iñ (Tib. & Sans. Avadāna Kalpalatā) Vol. I, Fasc. 1-5; Vol. II. Fasc. 1-5 @ 1/ each ... ... ... | 11 | 0 |

*Arabic and Persian Series.*

| | | |
|---|---|---|
| *Alamgirnāmah, with Index, (Text) Fasc. 1-13 @ /10/ each ... ... | 8 | 2 |
| Al-Muqaddasi (English) Vol. I, Fasc. 1-3 @ 1/- each ... ... | 3 | 0 |
| Āin-i-Akbari, Fasc. 1-22 @ 1/8/ each ... ... ... ... | 33 | 0 |
| Ditto (English) Vol. I, Fasc. 1-7, Vol. II, Fasc. 1-5, Vol. III, Fasc. 1-5, @ 2/- each ... ... ... ... ... | 34 | 0 |
| Akbarnāmah, with Index, Fasc. 1-37 @ 1/8/ each ... ... ... | 55 | 8 |
| Ditto (English) Vol. I, Fasc. 1-8; Vol. II, Fasc. 1-4 @ 1/4/ each | 15 | 0 |
| Arabic Bibliography, by Dr. A. Sprenger, @ /10/ ... ... ... | 0 | 10 |
| *Bādshāhnāmah, with Index, Fasc. 1-19 @ /10/ each ... ... | 11 | 14 |
| Conquest of Syria, Fasc. 1-9 @ /10/ each ... ... ... | 5 | 10 |
| Catalogue of Arabic Books and Manuscripts, 1-2 @ 1/- each ... ... | 2 | 0 |
| Catalogue of the Persian Books and Manuscripts in the Library of the Asiatic Society of Bengal. Fasc. 1-3 @ 1/ each ... ... ... | 3 | 0 |
| Dictionary of Arabic Technical Terms, and Appendix, Fasc. 1-21 @ 1/8/ each | 31 | 8 |
| Farhang-i-Rashidi, Fasc. 1-14 @ 1/8/ each ... ... ... | 21 | 0 |

*The other Fasciculi of these works are out of stock, and complete copies cannot be supplied.

परिशिष्टप्रकाशः।

इत्यादिपदद्वयात्मकमन्त्रप्रयोग उक्तो भवति। नमो ब्रह्मण इति

---

प्रभा।

इति। इत्येवमित्यत्र, इतिः पूर्व्वोक्तपदद्वयपरामर्शार्थः। एवमिति क्रमार्थम्। एवञ्च पृथिव्यै नमः इत्यादिरूपो बलिमन्त्रः सिध्यति। प्रदानार्थपदानां स्वधाकारादीनामन्तएव प्रयोगस्य प्रायशो-दर्शनाच्चैतदेवं प्रतिपत्तव्यम्। अतएव स्वधाकारेण निर्वपेदित्यादि वक्ष्यति।

अत्र च नमः पृथिव्यै इत्यादिर्नमस्कारादिर्मन्त्रो न तु तदन्तः। नमो ब्रह्मणे इति वास्तुबलौ विकृतौ तथा दर्शनात्। वैकृतवचनेनापि च अर्च्चिनो दीव्यन्ति इत्यादिना प्रकृतौ भागव्यवस्थाया दृष्टत्वात्। असुष्मै नम इति न क्रमपरं, किन्तु असुष्मै नम इत्युभयमुक्त्वा बलिदानं विधत्ते। अन्यथा परिशिष्ट-सूत्रविरोधापत्तेरिति परिशिष्टप्रकाशः।

वयन्तु पश्यामः। इत्येवं बलिदानमिति शब्देन क्रमस्योक्त-त्वात् वैकृतदृष्टक्रमकल्पनाया अवसर एव नास्ति। यत्र हि प्रकृतौ किमपि नोपदिश्यते, तत्रैव विकृतौ दृष्टं परिकल्प्यते। इह तु प्रकृतौ विशेषोपदेशात् आकाङ्क्षैव नोदेति कैवावसरो विकृति-परिदृष्टकल्पनायाः। न च परिशिष्टसूत्रयोर्विरोधः। परिशिष्टस्य प्राकृतबलिविषयत्वात् सूत्रस्य च वैकृतबलिविषयत्वात् अनयो-र्विरोधशङ्काऽनवसरात्। किञ्च परिशिष्टकारः खल्वयमस्पष्टानां

| | | |
|---|---|---|
| *Mīmāṁsā Darçana, Fasc. 6-19 @ /10/ each ... ... | Rs. 8 | 12 |
| Nyāyavārtika, Fasc. 1-6 @ /10/ each ... ... ... ... | 3 | 12 |
| *Nirukta, Vol. IV, Fasc. 1--8 @ /10/ each ... ... ... | 5 | 0 |
| *Nitisara, Fasc. 2-5 @ /10/ each ... ... ... ... | 2 | 8 |
| Nityācārapaddhatiḥ, Fasc. 1--7 @ /10/ each ... ... ... | 4 | 6 |
| Nityācārapradīpaḥ Vol. I, Fasc. 1--8 ; Vol. II, Fasc. 1. @ /10/ each ... | 5 | 10 |
| Nyayabinduṭīkā, Fasc. 1 @ /10/ each .. ... | 0 | 10 |
| *Nyāya Kusumāñjali Prakaraṇa Vol. I, Fasc. 2--6 ; Vol. II, Fasc. 1--3 @ /10/ each ... ... ... ... ... | 5 | 0 |
| Padumawati, Fasc. 1--5 @ 2/ ... ... ... ... | 10 | 0 |
| Pariçiṣṭa Parvan, Fasc. 3--5 @ /10/ each ... ... ... | 1 | 14 |
| Prākrita-Paingalam, Fasc. 1--7 @ /10/ each ... ... ... | 4 | 6 |
| Prithivirāj Rāsa. Part II, Fasc. 1--5 @ /10/ each ... ... ... | 3 | 2 |
| Ditto (English) Part II, Fasc. 1 @ 1/- ... ... ... | 1 | 0 |
| Prākrta Lakṣaṇam Fasc. 1 @ 1/8/ each ... ... ... ... | 1 | 8 |
| Parāçara Smṛti, Vol. I, Fasc. 1--8 ; Vol. II, Fasc. 1--6 ; Vol. III, Fasc. 1--6 @ /10/ each ... ... ... ... ... | 12 | 8 |
| Parāçara, Institutes of (English) @ 1/- each ... ... ... | 1 | 0 |
| Prabandhacintāmaṇi (English) Fasc. 1--3 @ 1/4/ each ... ... | 3 | 12 |
| Saddarsana-Samuccaya, Fasc. 1-4 @ /10/ each ... ... ... | 1 | 4 |
| *Sāma Vēda Saṁhitā, Vols. I, Fasc. 7--10 ; II, 1-6 ; III, 1--7 ; IV, 1--6 ; V, 1-8, @ /10/ each ... ... ... ... | 19 | 6 |
| Sāṅkhya Sūtra Vṛtti, Fasc. 1-4 @ /10/ each ... ... ... | 2 | 8 |
| Ditto (English) Fasc. 1--3 @ 1/- each ... ... | 3 | 0 |
| *Sankara Vejaya, Fasc. 2-3 @ /10/ each ... ... ... | 1 | 4 |
| Srāddha Kriyā Kaumudī, Fasc. 1-6 @ /10/ each ... ... ... | 3 | 12 |
| Sragdharā stotra ( Sanskrit and Tibetan ) ... ... ... ... | 2 | 0 |
| Srauta Sutra Latyayan, Fasc. 1-9 @ /10/ each ... ... ... | 5 | 10 |
| „ „ Asbalayana, Fasc. 4-11 @ /10/ each ... ... ... | 5 | 0 |
| Suçruta Saṁhitā, (Eng.) Fasc. 1 @ 1/- each ... ... ... | 1 | 0 |
| Suddhikaumudī, Fasc. 1-4 @ /10/ each ... ... ... ... | 2 | 8 |
| *Taittreya Brahmana, Fasc. 6-25 @ /10/ each .. ... ... | 12 | 8 |
| „ Pratisakhya, Fasc. 1-3 @ /10/ each ... ... ... | 1 | 14 |
| *Taitterīya Saṁhitā, Fasc. 27--45 @ /10/ each ... ... ... | 11 | 14 |
| Tāṇḍya Brāhmaṇa, Fasc. 7--19 @ /10/ each ... ... ... | 6 | 14 |
| Tantra Vārtcka (English) Fasc. 1-6 @ 1/4/ each ... ... ... | 7 | 8 |
| Tattva Cintāmaṇi, Vol. I, Fasc. 1-9, Vol II, Fasc. 2-10, Vol. III, Fasc. 1-2, Vol. IV, Fasc. 1, Vol. V, Fasc. 1-5, Part IV, Vol. II, Fasc. 1-12 @ /10/ each | 23 | 12 |
| Tattvārthadhigama Sutram, Fasc. 1-3 @ /10/ each ... ... ... | 1 | 14 |
| Trikāṇḍa-Maṇḍanam, Fasc. 1-3 @ /10/ each ... ... ... | 1 | 14 |
| Tul'si Satsai, Fasc. 1--5 @ /10/ each ... ... ... ... | 3 | 2 |
| Upamita-bhava-prapañca-kathā, Fasc. 1-11 @ /10/ each ... ... | 6 | 14 |
| Uvāsagadasāo, (Text and English) Fasc. 1--6 @ 1/- each ... ... | 6 | 0 |
| Vallāla Carita, Fasc 1 @ /10/ ... ... ... ... | 0 | 10 |
| Varṣa Kriyā Kaumudī, Fasc 1--6 @ /10/ each ... ... ... | 3 | 12 |
| *Vāyu Purāṇa, Vol. I, Fasc. 3--6 ; Vol. II, Fasc. 1--7, @ /10/ each ... | 6 | 14 |
| Vidhāna Pārijata, Fasc. 1--8 Vol. II. Fasc. I @ /10/ each ... ... | 5 | 10 |
| Vivādaratnākara, Fasc. 1--7 @ /10/ each ... ... ... | 4 | 6 |
| Vṛhat Svayambhū Purāṇa, Fasc. 1--6 @ /10/ each ... ... ... | 3 | 12 |
| *Yoga Aphorisms of Patanjali, Fasc. 3-5 @ /10/ each ... ... | 1 | 14 |
| Yogasāstra of Hemchandra Vol. I. Fasc. 1. ( 200 pages. ) ... ... | 1 | 4 |

*Tibetan Series.*

| | | |
|---|---|---|
| Pag-Sam Ṭhi S'iñ, Fasc. 1--4 @ 1/ each ... ... ... ... | 4 | 0 |
| Sher-Phyin, Vol. I, Fasc. 1-5 ; Vol. II, Fasc. 1-3 ; Vol. III, Fasc. 1-6, @ 1/ each | 14 | 0 |
| Rtogs brjod dpag bkhri S'iñ ( Tib. & Sans. Avadāna Kalpalatā ) Vol. I, Fasc. 1--6 ; Vol. II. Fasc. 1--5 @ 1/ each ... ... ... | 11 | 0 |

*Arabic and Persian Series.*

| | | |
|---|---|---|
| 'Ālamgirnāmah, with Index, (Text) Fasc. 1--13 @ /10/ each ... ... | 8 | 2 |
| Al-Muqaddasi (English) Vol. I, Fasc. 1--3 @ 1/- each ... ... | 3 | 0 |
| Āin-i-Akbarī, Fasc. 1-22 @ 1/8/ each ... ... ... ... | 33 | 0 |
| Ditto (English) Vol. I, Fasc. 1--7, Vol. II, Fasc. 1--5, Vol. III, Fasc. 1--5, @ 2/- each ... ... ... ... | 34 | 0 |
| Akbarnāmah, with Index, Fasc. 1--37 @ 1/8/ each ... ... ... | 55 | 8 |
| Ditto (English) Vol. I, Fasc. 1--8 ; Vol. II, Fasc. 1-4 @ 1/4/ each | 15 | 0 |
| Arabic Bibliography, by Dr. A. Sprenger, @ /10/ ... ... ... | 0 | 10 |
| *Bādshāhnāmah, with Index, Fasc. 1--19 @ /10/ each ... ... | 11 | 14 |
| Conquest of Syria, Fasc. 1-9 @ /10/ each ... ... ... | 5 | 10 |
| Catalogue of Arabic Books and Manuscripts, 1-2 @ 1/- each ... ... | 2 | 0 |
| Catalogue of the Persian Books and Manuscripts in the Library of the Asiatic Society of Bengal. Fasc. 1--3 @ 1/ each ... ... ... | 3 | 0 |
| Dictionary of Arabic Technical Terms, and Appendix, Fasc. 1-21 @ 1/8/ each | 31 | 8 |
| Farhang-i-Rashīdī, Fasc. 1-14 @ 1/8/ each ... ... ... | 21 | 0 |

*The other Fasciculi of these works are out of stock, and complete copies cannot be supplied.

| | | |
|---|---|---|
| Fihrist-i-Ṭūsī, or, Ṭūsy's list of Shy'ah Books, Fasc. 1--4 @ 1/- each | Rs. 4 | 0 |
| Futūḥ-ush-Shām of Wāqidī, Fasc. 1--9 @ /10/ each ... ... | 5 | 10 |
| Ditto of Āzādī, Fasc. 1--4 @ /10/ each ... ... ... | 2 | 8 |
| Haft Asmān, History of the Persian Masnawi, Fasc. 1 @ /12/ each ... | 0 | 12 |
| History of the Caliphs, (English) Fasc. 1--6 @ 1/4/ each ... ... | 7 | 8 |
| Iqbālnāmah-i-Jahāngiri, Fasc. 1--3 @ /10/ each ... ... ... | 1 | 14 |
| Iṣābah, with Supplement, 51 Fasc. @ 1/- each ... ... ... | 51 | 0 |
| Ma'āṣir-i-'Ālamgiri, Fasc. 1--6 @ /10/ each ... .. ... | 3 | 12 |
| Maāṣir-ul-Umarā, Vol. I, Fasc. 1--9, Vol. II, Fasc. 1--9 ; Vol. III, 1-10 ; Index to Vol. I, Fasc. 10-11 ; Index to Vol. II, Fasc. 10-12 ; Index to Vol. III, Fasc. 11-12 @ /1/ each ... ... ... | 35 | 0 |
| Maghāzi of Wāqidī, Fasc. 1--5 @ /10/ each ... ... ... | 3 | 2 |
| Muntakhabu-t-Tawārikh, Fasc. 1--15 @ /10/ each ... ... ... | 9 | 6 |
| Ditto ( English ) Vol. I, Fasc. 1--7 ; Vol. II, Fasc. 1--5 and 3 Indexes ; Vol. III, Fasc. 1 @ 1/ each ... ... ... | 15 | 0 |
| Muntakhabu-l-Lubāb, Fasc. 1--19 @ /10/ each ... ... ... | 11 | 14 |
| Nukhbatu-l-Fikr, Fasc. 1 @ /10/ ... ... ... ... | 0 | 10 |
| Niẓāmī's Khiradnāmah-i-Iskandari, Fasc. 1--2 @ /12/ each ... ... | 1 | 8 |
| Riyāẓu-s-Salāṭin, Fasc. 1--5 @ /10/ each ... ... ... ... | 3 | 2 |
| Ditto (English) Fasc. 1--5 @ 1/ ... ... ... | 5 | 0 |
| Tabaquāt-i-Nāṣirī, Fasc. 1--5 @ /10/ each ... ... ... ... | 3 | 2 |
| Ditto (English) Fasc. 1--14 @ 1/ each ... ... ... | 14 | 0 |
| Ditto Index ... ... ... ... ... | 1 | 0 |
| Tārīkh-i-Fīrūz Shāhi of Ẓiyāu-d-dīm Barni Fasc. 1--7 @ /10/ each ... | 4 | 6 |
| Tārīkh-i-Fīrūzshāhi, of Shams-i-Sirāi Aif, Fasc. 1--6 @ /10/ each ... | 3 | 12 |
| Ten Ancient Arabic Poems, Fasc. 1--2 @ 1/8/ each ... ... ... | 3 | 0 |
| Tuzuk-i-Jahāngirī, (Eng.) Fasc. 1 @ 1/ ... ... ... ... | 1 | 0 |
| Wis-o-Rāmīn, Fasc. 1--5 @ /10/ each ... ... ... ... | 3 | 2 |
| Zafarnāmah, Vol. I, Fasc. 1--9, Vol. II, Fasc. 1--8 @ /10/ each ... ... | 10 | 10 |

---

## ASIATIC SOCIETY'S PUBLICATIONS.

| | | | |
|---|---|---|---|
| 1. | Asiatic Researches. Vols. XIX and XX @ 10/ each ... ... | 20 | |
| 2. | Proceedings of the Asiatic Society from 1870 to 1904 @ /8/ per No. | | |
| 3. | Journal of the Asiatic Society for 1870 (8), 1871 (7), 1872 (8), 1873 (8), 1874 (8), 1875 (7), 1876 (7), 1877 (8), 1878 (8), 1879 (7), 1880 (8), 1881 (7), 1882 (6), 1883 (5), 1884 (6), 1885 (6), 1886 (8), 1887 (7), 1888 (7), 1889 (10), 1890 (11), 1891 (7), 1892 (8), 1893 (11), 1894 (8), 1895 (7), 1896 (8), 1897 (8), 1898 (8), 1899 (8), 1900 (7), 1901 (7), 1902 (9), 1903 (8), 1904 (16), @ 1/8 per No. to Members and @ 2/. per No. to Non-Members | | |

*N. B.—The figures enclosed in brakets give the number of Nos. in each Volume.*

| | | | |
|---|---|---|---|
| 4. | Journal and Proceedings, N. S., 1905, to date, @ 1-8 per No. to Members and Rs. 2 per No. to Non-Members. ... ... | | |
| 5. | Memoirs, 1905, to date. Price varies from number to number. Discount of 25% to Members. | | |
| 6. | Centenary Review of the Researches of the Society from 1784-1883 ... | 3 | 0 |
| | A sketch of the Turki language as spoken in Eastern Turkistan, by R. B. Shaw (Extra No., *J.A.S.B.*, 1878) ... ... ... | 4 | 0 |
| | Catalogue of Mammals and Birds of Burmah, by E. Blyth (Extra No., *J.A.S.B.*, 1875) ... ... ... ... ... | 4 | 0 |
| 7. | Catalogue of the Library of the Asiatic Society, Bengal, 1884. ... | 3 | 8 |
| 8. | Mahābhārata, Vols. III and IV, @ 20/ each ... ... ... | 40 | 0 |
| 9. | Moore and Hewitson's Descriptions of New Indian Lepidoptera, Parts I--III, with 8 coloured Plates, 4to. @ 6/ each ... ... | 18 | 0 |
| 10. | Tibetan Dictionary, by Csoma de Körös ... ... ... | 10 | 0 |
| 11. | Ditto Grammar ,, ,, ... ... ... | 8 | 0 |
| 12. | Kaçmiraçabdāmṛta, Parts I & II @ 1/8/ ... ... ... | 3 | 0 |
| 13. | A descriptive catalogue of the paintings, statues, &c., in the rooms of the Asiatic Society of Bengal by C. R. Wilson .. ... ... | 1 | 0 |
| 14. | Memoir on maps illustrating the Ancient Geography of Kasmir, by M. A. Stein Ph.D., Jl. Extra No. 2 of 1899 ... ... ... | 4 | 0 |
| 15. | Persian Translation of Haji Baba of Ispahan, by Haji Shaikh Ahmad-i-Kirmasi, and edited with notes by Major D. C. Phillott. ... | 10 | 0 |

---

| | | |
|---|---|---|
| Notices of Sanskrit Manuscripts, Fasc. 1-34 @ 1/ each ... ... | 34 | 0 |
| Nepalese Buddhist Sanskrit Literature, by Dr. R. L. Mitra ... | 5 | 0 |

*N.B.*—All Cheques, Money Orders, &c., must be made payable to the "Treasurer, Asiatic Society," only.

15-2-09.

**Books are supplied by V. P. P.**

# NOTE FOR LIBRARIANS.

This second fascicle of the Karmapradīpa is a continuation of the first (double) one which was issued in 1909 (as No. 1204) under the editorship of, and with a commentary by, Mahāmahopādhyāya Chandrakānta Tarkālaṅkāra. After the regretted death of this first Editor further progress of the work was suspended for some years, and has now been resumed by the present Editor. This second fascicle runs on without a break from the first double one, in continuation of p. 192; but to mark the change in editorship as well as in the authorship of the commentary, a fresh page-numbering has been started. This has necessitated the repetition of the title of the work as a heading of this second fascicle in order to enable possessors of the book to bind the two parts of the commentary by the two different Editors either separately or together as they prefer. Librarians should note that the new Editor, in accordance with traditional Indian custom, heads his work with an invocation, which does not form part of the work and does not indicate that the work itself is new but only serves as an auspicious beginning at the occasion of his taking up the continuation of it. This invocation should have been separated from the text which follows by a rule. Further, the first words of both the continued text and the commentary are indented which should not be, and it happens that the first letter of the first word of the commentary is a misprint, and should be ख instead of स्व. A footnote in Sanskrit on the first page of this fascicle supplies part of the above information.

CALCUTTA,
*September*, 1923.

*General Secretary,*
*Asiatic Society of Bengal.*

# कर्मप्रदीपः ।



## परिशिष्टप्रकाशः ।

वास्तुबलौ यतो गोभिलेन नमस्कारः कृतः प्रमाणार्थमिति

## प्रभा[१] ।

मातामहमहाशैलं महस्तद्पितामहम् ।
कारणं जगतां वन्दे कण्ठादुपरि वारणम् ॥

स्पष्टीकरणार्थं खलु स्वस्य ग्रन्थरचनाप्रवृत्तिमुपक्रमे प्रतिजानाति स्म । यदि वाचाप्यस्पष्टमेव मन्त्राकारो विनिर्दिष्टः स्यात्, तर्हि प्रतिज्ञोपरोधोऽपरिहरणीयः स्यादिति चन्द्रकान्ततर्कालङ्कारमहाशया मन्यन्ते ॥

तत्राऽयं श्लोकः यदि मन्त्राकारसमर्पकः स्यात्, तर्हि प्रकाशकाराणामुपरि निर्दिष्टोऽयं दोषोऽवसरमाप्नोत्येव, परं तु नाऽयं

(१) इयं प्रभा पूर्वतनभागप्रकाशितप्रभातो विभिन्ना । श्रीतर्कालङ्कारकृत-प्रभाशेषो न मयाऽधिगत इति कथमपि मद्व्याख्यस्य परिशिष्टप्रकाशस्य प्रकाशनमारब्धं तथैवाऽन्तं प्रकाशनीयं रीत्यभङ्गार्थमिति प्रभाशेषः परिपूरितः ॥ परिशिष्टप्रकाशविवरण-मिषेण तत्सिद्धान्तखण्डनमेव पूर्वं तर्कालंकारैः कृतम्, मया तु परिशिष्टप्रकाशसिद्धान्त-संरक्षणं गोभिलभाष्ये प्रकाशोपरिप्रदर्शितदूषणपरिहारपूर्वकं मद्व्याख्येयभागेषु निरू-प्यते, पूर्वतनभागे प्रभायां प्रदर्शितानां दूषणानामपि परिहारो भूमिकायामस्य ग्रन्थस्य प्रकाशयिष्यते । सर्वथा मम मूलसंरक्षणाभिनिवेशस्य तर्कालङ्कारसिद्धान्तनिरासप्रयास-मिदं सर्वेषां न दुःखाय भवेदिति विश्वसिमि ॥ इति चन्द्रकान्तशर्माणौ ॥

पाठे प्रमाणपदं मन्त्रपरम् । हेत्वन्तरमाह—

**स्वाहाकारवषट्कारहन्तकारा दिवौकसाम् ।**

---

श्लोको मन्त्राकारसमर्पकः, किं तु बलिदाने नमश्शब्दप्रयोग-नियमनार्थः । अत एव—"नमस्कारः कृतो यतः" इत्युत्तरार्ध-मुपपद्यते । तत्र नमश्शब्दः चतुर्थ्यन्तपदसमवहित एव प्रयुज्यमानो निराकाङ्क्षो भवतीति "अमुष्मै" इति पदस्याऽप्यत्रोपादानं ग्रन्थकारेण कृतं, न तु पूर्वं चतुर्थ्यन्तपदप्रयोगावश्यकतासूचनार्थम् । तथाचात्र नमःपदस्य पूर्वं वा निवेशो युक्त उत परमिति निर्णयो वैकृतवचनानुसारेणैव भवति ॥

अयं भावः—"नमस्कारः कृतो यतः" इति वाक्यं हि विकृतौ बलिदाने सूत्रकारेण नमश्शब्दप्रयोगात् प्रकृतावपि नमश्शब्द एव प्रयोक्तव्य इत्येतदर्थपरमिति तर्कालङ्कारमहाशया-नामपि संमतम् । एवंच वैकृतवचनेन नमश्शब्दप्रयोगविषये व्यवस्था क्रियमाणा तत्रैवात्राऽपि तस्य पूर्वप्रयोग एवोपपद्यत इति तर्कालङ्कारमहाशयानां प्रकाशखण्डनयुक्तीनां नावकाश इति सूचयितुं "नमस्कारः कृतो यतः" इत्येतत् वास्तुबलावित्यादि-पूरणेन व्याचष्टे— **वास्तुबलाविति** । विकृताविति शेषः ॥

अत्र बलिदानप्रदानार्थं बलिदानप्रमाणार्थमिति पाठद्वयं वर्तते । तत्र च प्रथम एव पाठ उत्तमः । यतो "नमस्कारः कृतो यतः" इत्यनेनान्वयः स्वरसं तत्रैव भवति । स्वाहास्वधा-हन्तकारादयो हि दानार्थमेव प्रयुज्यन्ते, न मन्त्रार्थं इत्यभि-

**स्वधाकारः पितॄणां तु[१] हन्तकारो नृणां मतः[२] ॥**

स्वाहाकारादयस्त्रयो देवकर्मार्थतया देवसंबन्धिनः। अतोऽपि नमस्कारेण दैवबलिदानं युक्तम्। स्वधाकारहन्तकारौ तु यस्मात् पितृमनुष्यार्थौ ॥

**स्वधाकारेण निर्वपेत्[३] पित्र्यं बलिमतः सदा।**
**तमप्येके नमस्कारैः कुर्वते नेति गोतमः ॥**

**निर्वपेत्** दद्यात्। शेषं निगदव्याख्यातम्। आद्यन्तयोः स्वधाभ्यनुज्ञानात् **तमप्येके नमस्कारैरिति** पूर्वपक्षो न तु विकल्पार्थं इति ॥ बलीनां प्रमाणमाह—

---

प्रायेण तं व्याख्याय प्रमाणार्थं इति पाठेऽप्युपपत्तिमाह— **प्रमाणार्थमिति ॥**

एवंच मन्त्रे नमश्शब्दप्रयोगनियमनार्थमेवाऽयं श्लोक इति युक्तमेव। न हि "असुष्मै नमः" इत्यस्यैव मन्त्रत्वे मन्त्रार्थं नमस्कार इति युज्यत इति न "असुष्मै नमः" इत्ययं मन्त्राकारसमर्पक इति "इत्येवं बलिदाने"त्यस्याऽपि प्रकाशकारादृतव्याख्यानमेव युक्तमिति भावः। **हेत्वन्तरमाहेति**। "नमः पृथिव्यै" इत्यादौ नमश्शब्दस्यैव प्रयोग इत्यादिः। **न तु विकल्पार्थं इति**। यथा— "जर्तिलयवाग्वा वा जुहुयात् गवीधुकयवाग्वा वा न ग्राम्यान् पशून् हिनस्ति नाऽऽरण्यानथो खल्वाहुरनाहुतिर्वै जर्तिलाश्च गवीधुकाश्च पयसाऽग्निहोत्रं जुहोति" इत्यत्र जर्तिलविधिरर्थवादस्तथाऽत्रापि

---

(१) च (ख)। (२) स्मृतः (ख) (ग)। (३) नागराणां (ख)।

**न चावरार्ध्या बलयो भवन्ति**
**महामार्जारश्रवणप्रमाणात् ।**

महामार्जारकर्णपरिमाणादपकृष्टा अल्पपरिमाणा बलयो न भवन्ति ॥ "अथ बलीन् हरेद्बाह्यतो वान्तर्वा सुभूमिं कृत्वा" इत्यनेन सूत्रेणान्तर्वेति गृहमध्ये एकस्मिन्नेव स्थाने बलिदानमुक्तम्, बाह्यतस्तु "अथापरान् बलीन् हरेदुदधानस्य मध्यमस्य च दारस्य" इत्यादिना भिन्नस्थाने बलय उक्ताः । तत्र यद्येकत्र बलयो दीयन्ते तदा यथा दातव्यास्तदाह—

---

"तमप्येके" इत्यर्थवाद एवेति भावः । **महामार्जारेति** ॥ अङ्गुष्ठपर्वपरिमाणं इति तु भट्टभाष्यं ॥

**अथ बलीन् हरेदिति** । इदं हि सूत्रम् "अथ हविष्य-स्यान्नस्योद्धृत्य हविष्यैर्व्यञ्जनैरुपसिच्याऽग्नौ जुहुयात् तूष्णीं पाणिनैव" इति सूत्रानन्तरं प्रवृत्तमिति कारणेन अथशब्दस्य पूर्वप्रकृतार्थत्व-सुररीकृत्य होमावशिष्टेनैवान्नेन बलिहरणं इति गोभिलसूत्रभाष्ये चन्द्रकान्ततर्कालङ्कारमहाशया वर्णयन्ति ।

तत्र च होमावशिष्टस्य बलिहरणमिदं प्रतिपत्तिरूपं संपद्यते इति स्विष्टकृदादीनां पुरोडाशाद्यप्रयोजकत्ववत् बलिहरणस्यापि हविष्यान्नाप्रयोजकत्वेन हविष्यान्नस्य केनाऽपि निमित्तेनावशिष्टस्य नाशे बलिहरणलोपः प्राप्नोति । अतः पूर्वतनसूत्रगतस्योद्धृत्यपदस्य पृथक्कृत्येत्यर्थमङ्गीकृत्य बलिहरणार्थत्वमेव हविष्यशेषस्याऽङ्गीकर-णीयम् । अत एवोत्तरत्र "पिण्डवच्च पश्चिमा प्रतिपत्तिरिति

**एकत्र चेत् कृत्वा(१) भवन्तीतरेतरसंसक्ताश्च ॥"**

सुव्यक्तमिदम् ॥

**अथ तद्विन्यासः—**

**वृद्धिपिण्डानिवोत्तरांश्चतुरो बलीन् निदध्यात् ॥**

भूमिनिधानादेरेव प्रतिपत्तित्वमुच्यते, न तु बलिहरणस्यैव। तथाच पृथक्कृतान्नशेषलोपेऽप्यन्नान्तरेण बलिहरणं कर्त्तव्यमेव। अत एव बलिहरणस्य साक्षाददृष्टार्थत्वं न त्वन्नार्थत्वं इति तर्कालङ्कारसिद्धान्त उक्तभाष्यगतः उपपद्यते। न ह्युपयुक्तः कुत्राऽपि करणम्। अतएव— "पुरोडाशकपालेन तुषानुपवपति" "प्रयाजशेषेण हवींष्यभिघारयति," इत्यादौ तृतीयाया द्वितीयार्थत्वसिद्धान्तो मीमांसकानामुपपद्यते ॥

अत्र चान्नेन बलिहरणं इत्ययं न नियमविधिरिति तर्कालङ्कारमहाशया यद्वदन्ति, तत् सर्वं द्रव्यविधयो नियमविधयः इति सिद्धान्तविरुद्धम्। यच्च नियमविधित्वेऽस्य प्रतिनिधिशास्त्रविरोधापत्तिरिति तैरेवोक्तम्, तदपि "सोमेन यजेत" इत्यादिषु नियमविधिषु सत्स्वपि "यदि सोमं न विन्देत पूतीकानभिषुणुयात्" इति प्रतिनिधिनियमदर्शनात् चिन्त्योपपत्तिकम् ॥

**बलीनां मन्त्रमाहेति।** "पृथिव्यै वायवे" इत्यादिकमेव मन्त्रस्वरूपम्, नमश्शब्दादिकं तु लौकिकमेव वा, "इषेलेति

(१) चेद्विप्रकृष्टा भवन्तीत (ख)।

अथेति वाक्योपक्रमे। एकत्र दानपक्षे बलीनां विन्यासः आरोपः उच्यते इति शेषः। यद्युपक्रमेण चतुरश्चतुरो बलीनर्पयेत्, तर्हि वृद्धिपिण्डानिवेत्यनेन पुञ्जीभावेन नोत्तरोत्तरता किंतु पङ्क्तिक्रमेणेत्युक्तमिति ॥

बलीनां(१) मन्त्रमाह—

**पृथिव्यै वायवे विश्वेभ्यो देवेभ्यः प्रजापतय इति ॥**

---

शाखामप्यच्छिनत्ति" इति विनियोगविध्यनुसारेण छिनद्मिपदाध्याहारवत्, उत नमश्शब्दघटितस्यैव मन्त्रत्वं वा इति विशये वास्तुबलौ विकृतौ नमश्शब्दघटितस्यैव मन्त्रत्वादत्राऽपि प्रकृतौ तद्घटितस्यैव तत्त्वं युक्तं इति प्रकृतमन्त्रस्य न स्वाहादिघटितत्वं किन्तु नमश्शब्दघटितत्वमित्यादिनिर्णय इव नमश्शब्दादित्वनिर्णयोऽपि विकृत्यनुसारी युक्त एव। तत्र यदि प्रकृतौ नमश्शब्दादित्वं मन्त्रस्य निर्णीतं स्यात्, तर्हि विकृत्यनुसारी निर्णयोऽत्र न संभवेत्, न चेतदस्ति, पृथिव्यै इत्येवमेव मन्त्राकारस्याऽत्र निर्देशात् ॥

एतेन— विकृतौ वचनात् नमश्शब्दादित्वेऽपि प्रकृते न तद्विवक्षितं— इति गोभिलभाष्ये चन्द्रकान्ततर्कालङ्कारमहाशयोक्तं— परास्तम्; अत्र हि पृथिव्यै इत्यस्य बलिदाने विनियुक्तस्य न स्वाहादिघटितत्वमिति हि निर्णयो वास्तुबल्यनुसार्यैवेति प्रकाशकारैः "नमस्कारः कृतो यतः" इत्यस्य वास्तुबलाविति व्याख्याकरणेन सूचितमिति नाऽर्धजरतीयन्यायाश्रयणं युक्तम् ॥

---

(१) वायो (ख)।

एतैर्मन्त्रैः एकं चतुष्कं पूर्वोक्तविन्यासक्रमेण दद्यात्। अतश्च-तुर्थ्यन्तादधिको नमस्कारोऽपि प्रयोज्यः; अमुष्मै नमः इत्यभि-धानात्॥

अत्र च नमः पृथिव्यै इत्यादिनमस्कारादिर्मन्त्रो न तु तदन्तः; "नमो ब्रह्मण" इति वास्तुबलौ विकृतौ तथा दर्शनात्, वैकृतवचनेनाप्य"ग्निनो दीचयन्तौ"त्यादिना प्रकृतौ भागव्यवस्थाया दृष्टत्वात्, "अमुष्मै नमः" इति न तु क्रमपरं किंतु "अमुष्मै नमः" इति पदद्वयमुक्त्वा बलिदानं विधत्ते। अन्यथा परिवि-शिष्टसूत्रविरोधापत्तेः॥

**सव्यत एतेषामेकैकस्यैकैकमद्भ्य ओषधिवनस्पतिभ्य आकाशाय कामायेति॥**

**सव्यत** एतेषां चतुर्णां वामतः, स्वदक्षिणतो दक्षिणोपचारेण नमोऽद्भ्यः" इत्यादिमन्त्रैरपरं चतुष्कं निदध्यात्।

एकैकस्य दद्यादेकैकं बलिमिति॥

---

**ब्रह्मण इति**। अयमेव ब्रह्मण इति मन्त्रो विकृतावपि नमश्शब्दादिः प्रयुक्तः सूत्रकारेण, न तु तत्र मन्त्रान्तरविवक्षा; गौरवादित्येकस्यैव मन्त्रस्य प्रकृतिविकृतिभेदेनानुपूर्वीभेदो न युक्त इति भावः। **निनयेदिति वचनादिति**। "अथैतद्बलिशेष-मद्भिरभ्यासिच्यापसव्यं दक्षिणा निनयेत् पितृभ्यो भवति" इति सूत्रे पितृबलिदाने निनयेदिति वचनात्—

"स्वधाकारेण निनयेत् पित्र्यं बलिमतः सदा"

**एतेषामपि मन्यवे इन्द्राय वासुकये ब्रह्मण इति ॥**

**एतेषामपि** भवन्त इति शेषः ।

**सर्वेषां दक्षिणतः पितृभ्य इति ॥**

सर्वबलिदक्षिणतः स्ववामतो वामोपचारेण पितृभ्यः इति मन्त्रेण निनयेदिति वचनात् स्वधान्तेन बलिं निदध्यात् ॥ तत्र "चतुर्धा बलिं निदध्यात्" इति सूत्रात् बलिचतुष्टयमात्रमन्नं सकृद् गृहीत्वा चतुर्षु स्थानेषु निदध्यात्, बलिं इत्येकवचनाच्च- तुर्धेति वचनाच्चेति गोभिलभाष्यकाराभ्यां भट्टनारायणयशोमाभ्या- मुक्तम् । एतच्च सकृत् सेकपक्षे, नत्वनुविधानसेक इति वक्ष्यते ।

---

इति वचनानुसारेणात्र स्वधान्तत्वमेव युक्तमिति भावः ॥

**कामनायां सत्यामिति** । बलिदानं हि क्रियारूपं स्वत एव पुरुषार्थसाधनं भवितुमर्हतीति न दध्यादीनामिवाऽऽश्रया- पेक्षेति नाऽत्र काम्येन नित्यबाधः काम्यानामेषामङ्गत्वेऽपि संभव- तीति कामनायां सत्यां समुच्चय एव न विकल्पः । यत्र हि गौदियवादौ तृतीयावगतनिरपेक्षसाधनत्वस्य समुच्चयाङ्गीकारे बाधापत्तिस्तत्रैव समुच्चयो न क्रयादौ धातुवोध्ये ॥

**गृह्यान्तरोक्तक्रमानुसारेणेति** । सर्वशाखाप्रत्ययन्याये- नेति शेषः । **न स्यातामिति** । **पूर्वमिति च** । एवं च सामान्यहोमानामपि काम्यवत् समुच्चयेनैवानुष्ठानयोग्यानां यत्र कुत्राऽप्यनुष्ठाने प्रसक्ते आगन्तुकानामन्ते निवेश इति न्यायेनान्त एवाऽनुष्ठानमिति सिद्धम् ॥

**चतुर्दश नित्याः, आग्रास्यप्रभृतयः काम्याः, सर्वेषा-मुभयतोऽपि परिषेकः पिण्डवच्च पश्चिमा प्रतिपत्तिः।**

एतेन पृथिव्यादिदेवताश्चतुर्दशबलयोऽहरहरवश्यं देयाः॥ "स्वयं लेवाग्रास्यबलीन् हरेद्यवेभ्योऽध्याव्रीहिभ्यो व्रीहिभ्योऽध्याय-वेभ्यः स लाग्रास्यो नाम बलिर्भवति" इति सूत्रेण यवसस्यपाका-दारभ्य व्रीहिसस्यपाकपर्यन्तं व्रीहिसस्यपाकाद्यारभ्य यवसस्यपाक-पर्यन्तं बलिद्वयमाग्रास्यबलिपदवाच्यं काम्यं दीर्घायुष्ट्वफलकमुक्तं। कामनायां सत्यां देयमिति सिद्धम्। देवता चात्र व्रीहियवावेव। तथाच गृह्यान्तरम्—

"यवैर्यवेभ्य आवापो व्रीह्युत्पत्तेरधो बलिः।

---

यत्तु-गोभिलभाष्ये तर्कालङ्कारमहाशयैः—स्वशाखोक्तहोमेनैव फलसिद्धौ प्रयोजनाभावान्न समुच्चय इति निरूपितम्, यच्च सामान्यहोमादीनामपि काम्यतयाऽन्ते सन्निवेशेऽपि नित्यतया न सन्निवेशोऽस्ति इति चोक्तम्, तदिदं चिन्त्यम्। न हि सामान्य-होमसहितस्यैव स्वशाखोक्तस्य होमस्य सर्वशाखाप्रत्ययन्यायेन फलसाधनत्वे स्वशाखोक्तमात्रेण फलसिद्धिः, न हि सामान्यहोमा-नामपि काम्यतयैवान्ते सन्निवेशविवक्षायां "न स्यातां काम्यसामान्ये" इति श्लोके सामान्यपदप्रयोगः सार्थको भवतीति सर्वसमुच्चयपक्ष एवात्र युक्तः॥

अग्निधन्वन्तरिविश्वदेवहोमानां गौतमोक्तानां तु अनाहिताग्न्य-धिकारित्वादनाहिताग्निप्रयोगे समुच्चयेऽपि नाहिताग्निप्रयोगे सः,

व्रीहिभ्यो व्रीहिभिः पूर्वं यवोत्पत्तेर्जिजीविषोः ॥' इति ।

गोभिलैः— "यवेभ्यो व्रीहिभ्य" इति निर्दिष्टयोः कल्पना-लाघवात् देवतात्वमवसीयते ॥ प्रभृतिपदेन रौद्र यक्ष्मादिबलीनां च ग्रहणम् । तथाच गृह्यान्तरम्—

"यक्ष्मणे चोदकं दद्याद्यक्ष्मैतत्त इति ब्रुवन् ।

आरोग्यमस्य तेन स्यात् सायं रौद्राद्यथेप्सितम्" ॥

यत्कामयते तद्रौद्रबलिना सिध्यतीति ॥ रौद्रबलिश्च गोभिले-नाप्युक्तः— "विश्राणिते फलीकरणानामाचामस्यापामिति बलिं हरेत् स रौद्रो भवती"ति ॥ अस्यार्थः—दत्ते सर्वेभ्योऽन्ने (पाके नक्तं) फलीकरणानि कणाः, आचामो भक्तमण्डः आप इत्येतै-स्त्रिभिः बलिर्देयः स रौद्रो भवतीति । तथाच परिशिष्टम्—

"आचितं शकटं प्राहुर्द्रोणः स्यात् कांसमानकः ।

कम्बुकाश्च कणाश्चैव फलीकरणकम्बुशाः ॥" इति ॥

तेषां परिषेकश्च सकृत् प्रत्येकं वा । तथाच सूत्रम्—"सकृदापो निनीय चतुर्धा बलिं निदध्यात् सकृदन्ततः परिषिञ्चेत् ।" इति ॥ प्रतिनिधानमेकैकसेकपक्षे बलिचतुष्टयस्य न सकृद् ग्रहणं किंतु प्रत्येकमेव; अन्यथा दक्षिणहस्तेन सेकासंभवात् ।

---

तत्र प्राप्तेरेवाभावात् । एवंच गोभिलभाष्ये तर्कालङ्कारमहाशयैः "प्राजापत्या पूर्वाहुतिर्भवति" इति सूत्रे अग्निधन्वन्तर्यादीनां विकल्पो वा समुच्चयो वेति यो विचारः कृतः, स सर्वोऽपि निरा-लम्बन एव ।

"पिण्डवच्च पश्चिमा प्रतिपत्तिः" इत्यस्यायमर्थः । देवतोद्देशेन त्यक्तानां कृतोपयोगानां भूमौ निधानं प्रथमप्रतिपत्तिः, "यदाहवनीये जुहोति" इत्यादौ देवतोद्देशेन त्यक्तस्याग्नौ प्रक्षेपवत् पिण्डानामपि पितुद्देशेन त्यक्तानां स्तरणनिधानेन प्रथमा प्रतिपत्तिः । पश्चिमा तु—

एवं निर्वपणं कृत्वा पिण्डांस्तांस्तदनन्तरम् ।
गां विप्रमजमग्निं वा प्राशयेदप्सु वा क्षिपेत् ।"

इति मन्वाद्युक्ता एतद्बलीनामपीति । अत्र यद्यपि गोभिलेन नित्यबलिस्थाने मन्युदेवतान्तरबलीनुक्त्वा रक्षोबलिः पितृबलिश्चोक्तः, इन्द्रादिबलिचयं तु नोक्तम्, तथाऽपि वास्तुबलौ दशदिक्षु इन्द्रादिभ्यो दशबलिदानमुक्त्वा "प्राच्यूर्द्धावाचीभ्योऽहरहर्नित्यं

---

तथा हि— तत्र हि समुच्चयायोगे युक्तयः— १. स्वशाखोक्तेन सिद्धावितरवैयर्थ्यम्, २. प्राजापत्याहुतेरुक्तसूत्रे सर्वतः पूर्वत्वाभिधानविरोधः, ३. "यद्यक्त्वं वा स्वगृह्योक्तं यस्य कर्म प्रकीर्तितम्" इति गृह्यपरिशिष्टविरोधः, ४. सर्वेषां होमानां प्रधानत्वेनागुणत्वादुपसंहारायोगः, ५. देवताभेदेन कर्मैक्यायोगः; ६. "प्राजापत्या पूर्वाहुतिर्भवति सौविष्टकृत्युत्तरे"ति द्वयोरेव परिगणनेन पूर्वोत्तरत्वाख्यानं चेति षडभिहिताः ॥

तत्र प्रथमा युक्तिः पूर्वमेव निरस्ता । प्राजापत्याहुतेः स्विष्टकृदपेक्षया यत्पूर्वत्वमभिहितं नहि तत् ततः पूर्वं कमपि होमं

प्रयोगः" इत्यनेन सूत्रेण प्राच्यूर्द्ध्वाधोदिक्षु ये वास्तुकर्मणि बलि-दशकमध्ये इन्द्रब्रह्मवासुकिदेवत्याः बलय उक्ताः तैरहरहर्नित्य बलिमध्ये देया इत्युक्तम्। ततश्च गृह्यान्तरोक्तक्रमानुसारेण मन्यु-बलेरनन्तरमिन्द्रवासुकिब्रह्मदेवत्या बलयो देयास्ततो रक्षःपितृबली इति॥

**न स्यातां काम्यसामान्ये जुहोतिबलिकर्मणी॥**
**पूर्वं नित्यविशेषोक्तजुहोतिबलिकर्मणोः॥**

द्विविधं बलिकर्म काम्यं आग्राश्वादि, नित्यं च पार्थिवादि-चतुर्दशकम्, तथा होमोऽपि नित्यः प्राजापत्यः स्विष्टकृदादिरूपः, काम्यः काम्याधिकारे श्रुतावुक्तः—"सदा भोजनस्योपनीतस्याग्रमग्नौ जुहुयात् अग्ने विवस्वदुषसः इति पूर्वेण बलिं चोत्तरेण कुर्यात् बहुपशुधनधान्यो भवतीति" तथा विशेषोपदिष्टे गृह्योक्ते

---

वारयितुं शक्नोती इति नैतत्सूत्रं अग्निधन्वन्तर्यादिहोमनिषेधेऽपि समर्थं भवितुमर्हति। अस्तु वा तन्निषेधसमर्थम्। एवमप्युक्तसूत्रस्य आहिताग्न्यधिकारिकप्रयोगविषयत्वात् गौतमोक्तहोमानामनाहि-ताग्निविषयत्वाच्च नाऽनेन समुच्चयनिरासः संभवतीति न द्वितीय-हेतोरवसरः।

एतेन—षष्ठहेतुरपि—व्याख्यातः। सर्वशाखाप्रत्ययन्याये सति हि गृह्यान्तरोक्तानां गृह्यान्तरेऽनुपसंहारवर्णनं तन्न्यायोल्लङ्घननि-बन्धनमेवेत्यत्र न विवादः। अत्र च तेषामवकाशो यद्यपि "बहूल्पं वा स्वगृह्योक्तं" इति वचनं वर्तते; तथाऽपि तस्य तन्त्र-

शाखिविशेषनियते होमबलिकर्मणी संहितापुराणोक्ते च सामान्य-धर्मरूपे । तथाच—

"अग्नेः सोमस्य चैवादौ तयोश्चैव समस्तयोः" ॥

इत्यादि । विष्णुपुराणं च—

"देवा मनुष्याः पशवो वयांसि"

इत्यादि ॥

तत्र काम्यसामान्ये विहिते होमबलिकर्मणी न नित्यविशेष-विहितयोर्होमबलिकर्मणोः पूर्वं कर्तव्ये ॥

**काममन्ते भावयेत**(१) **न तु मध्ये कदाचन ।**
**नैकस्मिन् कर्मणि तते कर्मान्यत्तायते यतः ॥**

---

वार्तिकभाट्टदीपिकादावशक्तविषयत्वव्यवस्थापनात् अशक्तानां च नित्येष्वङ्गविशेषलोपस्याकिंचित्करत्वात् नैतत् समुच्चयनिरासाभि-प्रायमिति तृतीययुक्तिरपि नावसरति ।

एतेन— चतुर्थयुक्तिरपि— व्याख्याता । अत्र ह्यनाहिताग्न्य-धिकारिकं प्रयोगान्तरविधानं विवक्षितम् न तत्समुच्चितस्य प्रयोगस्य विधानं दृश्यते; पश्चाकृतीनां विहितत्वादिति न दोषात् । आग्नेयाग्नीषोमीयोपांशुयाजादीनां भिन्नानां प्रधानानामपि कर्मणां समुच्चयदर्शनात् न कर्मभेदोऽसमुच्चयप्रयोजक इति युक्तिमुक्तमिति ॥

उक्तं हि तैरपि—अनाहिताग्नेर्यत् कर्तव्यं तदप्याह कात्यायनः—

"अग्न्यादिर्गौतमेनोक्तो होमश्शाकल एव च" ।

---

(१) काममन्ते भवेयाताम् (ख) ।

परंतु नित्यविशेषविहितयोरन्ते सामान्यकाम्ये कर्तव्ये, मध्ये तु न कदाचन कर्तव्ये । अत्र हेतुमाह— **नैकस्मिन् कर्मणीति** । निगदव्याख्यातम् । अत एव "सदा भोजनस्योपनीतस्ये"ति श्रुत्युक्त-काम्यहोमे बलिं चोत्तरेणेत्यन्त एवोक्तम् ॥ काम्यमित्यनेन सामान्य काम्ययोर्नावश्यकता(काम्यस्य) किंतु करणेऽभ्युदयोऽकरणे प्रत्यवाया-भाव इति गम्यते । अत एव ग्रन्थान्तरम्—

स्वयमेव हरेत् काम्यान् बलीन् यावद्गृहे वसेत् ।
आतुरत्वे प्रवासे च न [१]तद्गृहबलिर्भवेत्" ॥ इति ॥

---

इति लिखद्भिरग्न्यादिहोमस्यानाहिताग्निविषयत्वं इत्यन्याधि-कारिकाणामन्यत्र समुच्चयप्रसङ्ग एव नास्तीति सर्वविदितमिदम् । तदेतत् सर्वं मनसि निधायाह—**काम्यमित्यनेनेति । काम्य-स्येति** ॥

यद्यपि मातृकायां सामान्यकाम्ययोर्नावश्यकतेत्येव पाठो दृश्यते ; तथाऽपि—अतएव ग्रन्थान्तरम्—

"स्वयमेव हरेत् काम्यान् बलीन् यावद्गृहे वसेत्" ।

इति श्लोकार्धोपष्टम्भार्थं काम्यमात्रविषयवचनोपन्यासात् काम्य-पदेन काम्यस्यैव सामान्यस्यानावश्यकतागमकताऽभावाच्च काम्यस्येति पाठ एवात्र समुचितः प्रतिभाति ॥

**अग्न्यादिर्गौतमेनोक्त इति** । अत्र च सौत्रबलिसहिता-ग्न्यादिहोमः पौराणबलिसहितशाकलहोमः सर्वबलिसहितहोम-

---

(१) च लोपो ग्रन्थबलेरिति पाठान्तरम् ।

**अग्न्यादिर्गौतमेनोक्तो होमः शाकल एव च ।**
**अनाहिताग्नेरेवैष युज्यते बलिभिः सह ॥**

अग्न्यादिरग्निर्धन्वन्तरिविश्वेदेवा प्रजापतिः स्विष्टकृदिति गौतमेन योऽग्न्यादिदेवताको होम उक्तः, ये च दिग्देवताभ्यस्च यथास्वमिति बलय उक्ताः, यश्चाश्वलायनसूत्रकारेण "इत्यष्टौ शकलान्याहवनीये प्रहरेयेयुर्देवकृतस्येनसः" इति यूपस्य शकलाष्टकेन देवकृतस्येत्यादि-मन्त्रैः शकलहोम उक्तः सोऽनाहिताग्नेरेव ॥ तथा प्रणवपरिशिष्टे—

---

द्वयमिति कल्पत्रयं प्रतिभाति । तत्राऽऽद्यं द्वयं रघुनन्दनादिमतम् । तर्कालङ्कारोद्धृतपितृदयिताकारादिमतं तृतीयमिति विवेकः । तत्र 'एव चे'ति चशब्दस्य समुच्चयवाचित्वस्यैव प्रसिद्धत्वात् तृतीयमतमेव युक्तमित्यभिप्रायेण व्याचष्टे— **अग्न्यादिरिति** ॥

"अग्नं व्याहृतिभिः पूर्वं कृत्वा मन्त्रैश्च शाकलैः ।
भूतेभ्यस्च बलिं दत्वा ततोऽश्नीयादनग्निकः ॥"
"अनग्निकस्तु यो विप्रो स्वयं व्याहृतिभिः स्वयम् ।
कृत्वा शाकलहोमैश्च शिष्टात् भूतबलिं हरेत् ॥"

इत्यग्निपुराणयोगयाज्ञवल्क्यप्रणवपरिशिष्टस्मृत्यन्तरगतेषु वचनेष्वपि होमद्वयस्यैव बलिभिः समुच्चयोऽभिधीयते ॥

अत्र हि "व्याहृतिभिर्हुत्वा" इत्यनेन प्रधानहोमस्याऽपि संग्रह उक्तप्राय एव । यत्तु तर्कालङ्कारमहाशयैः गोभिलभाष्ये कल्पान्तरपरत्वादासां स्मृतीनां केवलशाकलहोमाभिधानं न दोषायेति व्यवस्थापितम् । तत् कुत्राऽपि कल्पे पूर्वतनकल्पद्वयस्या-

अन्नं व्याहृतिभिर्हुत्वा तथा मन्त्रैश्च शाकलैः ।
भूतेभ्यश्च बलिं दत्वा ततोऽश्नीयादनग्निकः ॥ इति ॥

तथाऽग्निपुराणेऽप्युक्तं— "अन्नं व्याहृतिभिः पूर्वं हुत्वा" इत्यादि ॥

आहिताग्नेश्च "प्राजापत्या पूर्वाहुतिर्भवति स्विष्टकृदुत्तरे"ति गोभिलोक्तमाहुतिद्वयं चतुर्दशबलय इत्येतावन्मात्रं न तु गौतमोक्तदिग्देवताबलय इति ॥

---

विवक्षितत्वादनवसरमेव । तथाच कौथुमानामन्येषां च सर्वेषां समुच्चय एव होमद्वयस्याऽपि विवक्षित इत्येव युक्तमित्यभिप्रायेणैवाऽत्र परिशिष्टप्रकाशकाराणां कौथुमादिशब्दं विनैवोक्तश्लोकविवरणमुपपन्नमेव ॥

**आश्वलायनेति** । एतेन— गृह्यान्तरोक्तं गृह्यान्तरानुसारिभिः नाऽनुसरणीयमिति—परास्तम् । यथाचाऽत्र शाकलहोमे—

"षड्भिर्देवकृतस्येति मन्त्रवद्भिर्यथाक्रमम् ।"
"वैश्वानरं समभ्यर्च्य साज्यं पुष्पाक्षतैरपि ।"

इत्यादिव्यासस्कान्दपुराणवचनेषु च षड्द्वादशसंख्यान्तरनिर्देशेन विकल्पः, तत्र च व्यवस्थोदितहोमादिवत्तथाऽन्यच्च विस्तरः ॥

अत्र च होमे शाकले स्वाहाकारो नास्तीति सायणादिमतम् । अत्र च— "अष्टावष्टौ शाकलान्याहवनीये प्रहरेयुः देवकृतस्येत्येतत्प्रभृतिभिरिकारान्तैरिति" द्राह्यायणसूत्रं प्रमाणम् । अत्र हि— इकारान्तैः प्रहरेत् इत्युक्त्याऽवगम्यते नाऽत्र स्वाहाकारप्रयोगोऽपेक्षित

स्पृष्ट्वाऽपो वीक्षमाणोऽग्निं कृताञ्जलिपुटस्ततः।
वामदेव्यजपात् पूर्वं प्रार्थयेत् द्रविणोदसम्॥

वसुमिच्छेद्धुताशनात्" इति श्रुतेर्द्रविणदसमग्निं याचेत्। सान्तत्वं च निरुक्तमिति। शेषं निगदव्याख्यातम्। किं याचेत केन मन्त्रेणेत्यत आह—

आयुरारोग्यमैश्वर्यं धृतिं सत्यं बलं यशः।
तेजो वर्चः पशून् बीजं ब्रह्म ब्राह्मण्यमेव च॥

---

इति। यत्र हि वचनाविरोधस्तत्रैव स्वाहाकारो मन्त्रान्ते नियतः, न चाऽत्र स इति स्वाहाकारप्रयोगं विनैव मन्त्रोच्चारणम्। यथा सूक्तवाकेन प्रस्तरप्रहरणे न स्वाहाशब्दप्रयोगस्तद्वदिति भावः। एतेन— मन्त्रान्ते स्वाहाकारनियमादत्रापि स्वाहाकारोऽपेक्षित एवेति गोभिलभाष्ये तर्कालङ्कारसिद्धान्तस्थिन्त्योपपत्तिकः— इति सूचितम्॥

अन्नमिति॥ अत्र च श्लोके शाकलहोमादीनां बलिसाहित्यं यत् वर्णितं तत्र बलयोऽपि गौतमोक्ता एव वा, उत गृह्योक्ता एव वा इति संशये गोभिलभाष्ये तर्कालङ्कारमहाशया वर्णयन्ति— "बलयस्तनाहिताग्नेरपि गृह्योक्ता एव। न ह्यत्र "अन्वादि-गौतमेनोक्तः" इति होम इव बलिषु 'गौतमोक्तैरि'ति विशेषो-ऽवगम्यते, येन तेषामेवाऽत्राऽपि ग्रहणं स्यात्"— इति।

तत्र "बलिभिः सह"ेति बलीनां येन साहित्यं वर्णितं तत्र

**सौभाग्यं कर्मसिद्धिं च कुलज्यैष्ठं स्वकर्तृताम् ।**
**सर्वमेतत् सर्वसाक्षिन् द्रविणोदो विधेहि नः ॥**

**यशः** ख्यातिः, **तेजो** धृष्यता, **वर्चः** शरीरकान्तिः बीजं धान्यादिर्धातुविशेषो वा, **ब्रह्म** वेदः, **ब्राह्मण्यं** ब्राह्मणकर्म **स्वकर्तृता** निर्विघ्नकर्तृता ॥

**इति वैश्वदेवप्रकरणम् ॥**

---

गौतमोक्तस्य विशेषस्य निर्देशेन प्रत्यासत्त्या बलीनामपि तदुक्तानामेव ग्रहणं भवतीति न गृह्योक्तानां बलीनामनाहिताग्निविषयत्वम्, तेषां तु गृह्योक्तहोमानामिवाऽहिताग्निविषयत्वमेवेति विवेचयन्ति परिशिष्टप्रकाशकाराः—**आहिताग्नेश्चेति**। चस्त्वर्थः। **स्पृष्ट्वाऽपो वीक्षमाणोऽग्निमिति**। **ततः** काम्यबलिहरणानन्तरम् ॥

वैश्वदेवोऽन्नसंस्कारार्थो वा उतादृष्टार्थो वेति विषये विस्तरेण गोभिलभाष्ये तर्कालङ्कारमहाशयैस्तस्यादृष्टार्थत्वं साधितम् । एवं च हविर्विशेषस्यैव नेयं प्रतिपत्तिरिति सिद्धतीति पूर्वमेव निरूपितमुद्धृत्य पदस्यारस्यादिनेति सर्वमनवद्यम् ॥

**इति वैश्वदेवप्रकरणम् ।**

## अथ ब्रह्मयज्ञप्रकरणम् ।

न ब्रह्मयज्ञादधिकोऽस्ति यज्ञो
न तत्प्रदानात् परमस्ति दानम् ।
सर्वेऽन्तवन्तः क्रतवः सदाना
नान्तो दृष्टः कैश्चिदस्य द्वयस्य ॥

**ब्रह्मयज्ञात्** जपरूपात् श्रेष्ठो यज्ञो नास्ति । ब्रह्मदानात् अध्यापनरूपात् न श्रेष्ठदानमस्ति । हेतुमाह— सर्वे क्रतवः सर्वाणि दानानि विनाशवन्ति विनाशिस्वर्गादिरूपफलवन्तीत्यर्थः । अस्य तु द्वयस्य ब्रह्मदानजपरूपस्य कैश्चिदपि न विनाशः समान इत्यर्थः । अत्राप्यविनाशित्वमविनाशमोक्षफलत्वात् । तथाच मनुः— "ब्रह्म-साष्टिंतामिति । तथाच—

---

**ब्रह्मयज्ञात् जपरूपादिति ।** यद्यपि ब्रह्मयज्ञशब्दः "अध्यापनं ब्रह्मयज्ञः" इत्यादिवचनात् ब्रह्मप्रदानपर एव ; तथाऽपि गौण्या श्रुतिजपोऽपि ब्रह्मयज्ञपदबोध्य एव । तदुक्तम्—

"वेदमादित आरभ्य शक्तितोऽहरहर्जपेत् ।
यस्तु श्रुतिजपः प्रोक्तो ब्रह्मयज्ञः स उच्यते" ॥ इति ॥

भट्टभाष्ये—

"गुरावध्ययनं कुर्वन् शुश्रूषादि यदाचरेत् ।
स सर्वो ब्रह्मयज्ञः स्यात् तत्तपः परमुच्यते ॥"

इति गुरुसकाशादध्ययनमपि ब्रह्मयज्ञ इति वर्णितम् । तथा च "मुख्यो ब्रह्मयज्ञोऽध्यापनं गौणमितरत्" इति परिशिष्ट-

वेदमेव जपेन्नित्यं यथाकालमतन्द्रितः ।
तं ह्यस्याहुः परं धर्ममुपधर्मोऽन्य उच्यते ॥
वेदाभ्यासेन सततं दानेन तपसैव च ।
अद्रोहेण च भूतानां जातिं स्मरति पौर्विकीम् ॥
संस्मरन् पूर्वजातिं च ब्रह्मैवापद्यते जनः ॥

ब्रह्माभ्यासेनाजस्रमनन्तं फलान्तरमाह—

ऋचः पठन् मधुपयःकुल्याभिस्तर्पयेत् सुरान् ।
घृतामृताद्यकुल्याभिर्यजुषां(१) पठने सदा ॥
कुल्या स्वल्पा नदीत्येव ऋचमेषा हि च स्तुतिः ॥

---

प्रकाशकाराशयः । वक्ष्यति चोपसंहारे— "ततश्चाध्यापनात्मक-ब्रह्मयज्ञो मुख्यस्तदभावे जपः" इति । तत्र च मुख्याधिकारिणां दौर्लभ्यात् गौणस्यैव प्रथमतो विधिरत्र क्रियत इति भावः ॥

अस्य च ब्रह्मयज्ञस्य त्रयः कालाः—

स चाऽर्वाक् तर्पणात् कार्यः पश्चाद्वा प्रातराहुतेः ।
वैश्वदेवावसाने वा नाऽन्यत्रेति निमित्तकात् ॥

इति कात्यायनवचनेनावगम्यन्ते । तत्र यदि ब्रह्मयज्ञस्य तर्पणात् प्रागेवानुष्ठानं विवक्षितम्, तर्हि न कालत्रयं निरूपितं भवति । एवं च— "पश्चाद्वा वैश्वदेवावसाने वा" इति वा शब्दप्रयोगोऽपि बाधितो भवतीति द्वितीयादिकालसिद्ध्यर्थमेवमत्र व्यवस्था कात्या-

---

(१) यजुष्षु पठन् (ख) ।

स्तुत्यालंबनं च बहुतरमधुपयःपानजन्यतृप्तिः, एवमुत्तरत्रापि वाच्यम। शेषं सुगमम्।

**सामान्यपि पठन् सोमघृतकुल्याभिरन्वहम्।**
**मेदःकुल्याभिरपि च अथर्वाङ्गिरसः पठन्॥**

अत्रापि यज्ञसोमघृतपशुमेदोभिः प्रभूतैर्यादृशी तृप्तिस्तत्कुल्याभिः स्तुतेरालंबनम्। **अथर्वाङ्गिरस** इति अथर्ववेदं इत्यर्थः। बहुवचनं च वाक्यबहुत्वादिति॥

**मांसक्षीरोदनमधुकुल्याभिस्तर्पयेत् पठन्।**
**वाकोवाक्यं पुराणानि सेतिहासानि[1]चान्वहम्॥**

---

यनसंमता वक्तव्या। यथा— तर्पणात् प्राक् ब्रह्मयज्ञः, तर्पणानन्तरं यदि क्रियते, तर्हि प्रातराहुतेः पूर्वं वैश्वदेवावसाने वा कर्तव्य इति। तथाच— "तर्पणात् प्राक् ब्रह्मयज्ञः," तर्पणानन्तरं ब्रह्मयज्ञः,' इति पक्षद्वये कात्यायनोदाहृते द्वितीयपक्षस्यैवाभ्यर्हितस्य समादरो युक्त इति "स च अर्वाक्" इत्यस्य परिशिष्टप्रकाशकारोक्तं छन्दोगेतरविषयत्वं नाऽनुपपन्नम्॥

इदं च तर्पणपदं तर्पणसामान्यपरमेव, न पितृतर्पणमात्रपरम्। यथाहि— "आत्रेयाय दक्षिणां दद्यात्" "अग्निमुपनिधाय स्तुवीत" इत्यादौ च न प्रकृतानामेव ग्रहणं, किंतु प्रकृतस्याप्रकृतस्य वा प्रथमे, अप्रकृतस्यैव द्वितीये तद्वत्। तत्र हि वाक्यस्य प्रकरणेन संकोचो यत्र तस्य तदपेक्षा। यथा— "व्रीहीन्

---

(१) चान्वह (ख)।

**वाकोवाक्यं** प्रश्नोत्तररूपोपनिषद्भागविशेषः, **इतिहासो** महाभारतादि। तथाच देवलः— "आर्षपूर्ववृत्तान्ताश्रया प्रवृत्तिफला इतिहासाः" इति।

**ऋगादीनामन्यतममेतेषां शक्तितोऽन्वहम्॥**
**पठन् मध्वाज्यकुल्याभिः स्वपितॄनपि तर्पयेत्॥**

न केवलं सुरांस्तर्पयति, ऋगादीनामितिहासान्तानामन्यतममेकं यावच्छक्यं पठन् स्वपितॄनपि तृप्तान् करोति मध्वाज्यकुल्याभिरिति। अस्या अपि स्तुतेः पूर्ववदालम्बनमिति॥

**ते तृप्तास्तर्पयन्त्येनं जीवन्तं प्रेतमेव च।**
**कामचारी च भवति सर्वेषु सुरसद्मसु॥**

---

प्रोक्षति" "आग्नेय्याऽऽग्नीध्रमुपतिष्ठते" इत्यादौ। नचात्राऽङ्गाङ्गिभाव इति नास्य प्रकरणापेक्षेति तर्पणसामान्यविवक्षैवाऽत्र युक्ता। एवंच— स्नानाङ्गतर्पणात् पूर्वं ब्रह्मयज्ञानुष्ठानेऽपि पितृतर्पणस्य स्वकालेऽनुष्ठानं कर्तव्यमेव। एवमेव याजुर्वेदिकानां केषांचन शिष्टानां आचारोऽपि वर्तते। ते हि ब्रह्मयज्ञमात्रं सन्ध्योपासनानन्तरं कृत्वा वैश्वदेवानन्तरं तर्पणमाचरन्ति। एवंच— "अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम्" इति कर्मप्रदीपवचनं "पश्चाद्वा प्रातराहुतेः" इति वचनभागानुसार्येवेति सिद्धम्। एतेन— गोभिलभाष्ये तर्कालङ्कारमहाशयैः— इदं तर्पणं प्रकरणात् प्रकृतपितृतर्पणपरमेव "आग्नेय्याऽऽग्नीध्रं" इत्यत्र प्रकृतर्क्परत्वमिवेति यदुक्तं तत् चिन्त्यमिति सूचितम्॥

ते सुराः पितरश्च, **एनं तृप्तिसं**पादकं जीवन्तं मृतं चेहिका-मुष्मिकाभ्युदयसंपादनेन प्रीणयन्ति । शेषं सुगमम् ॥

**गुर्वंध्येनो न स्पृशति पङ्क्तिं चैव पुनाति सः ।**
**यं यं क्रतुं च पठति फलभाक् तस्य तस्य च ॥**

न केवलमभ्युदयप्राप्तिः, महापातकादिरूपमपि पापं न प्राप्नोति, जपेन पापं चीयत इत्यर्थः । श्राद्धे पङ्क्तिपावनश्च भवति, तद्वत् अश्वमेधादिक्रतुविधायकवेदभागपाठेन तस्य क्रतोः फलं प्राप्नोति । कथं महायाससाध्यक्रतुफलकथनं पाठमात्रादिति चेत् भूयस्त्वाल्पत्वाभ्यां फले विशेषात् न दोषः । यथा चित्रापाठेऽल्पत्वं पशूनां, चित्राऽनुष्ठानेन बहवः पशवः । एवं स्वर्गेऽपि चिराऽल्प-कालभोग्यतया विशेष इति ॥ फलान्तरं चाह—

---

अस्य च ब्रह्मयज्ञस्य "स्वाध्यायमधीयीत" इति वाक्यविहितस्य स्ववाक्ये फलानाम्नानेन किमपि फलं कल्पनीयं वा, उत रात्रि-सत्राधिकरणन्यायेनार्थवादिकफलकल्पनं नैव युक्तमिति विशये—"फलमात्रेयो निर्देशात्" इति सूत्रेण सत्यार्थवादिके फले न विश्वजिन्न्यायप्रवृत्तिरिति न्यायसिद्धमर्थं मनसि निधायाह—**ऋचं पठन्निति** ॥

वाकोवाक्येतिहासयोर्भेदमाह— **वाकोवाक्यमिति** । "पितॄन् स्वधा अभिवहन्ति" इत्यर्थवादसिद्धं फलान्तरमाह—**ऋगादीना-मिति** । "यं यं क्रतुमधीते तेन तेनाऽस्येष्टं भवत्यग्नेर्वा-

**वसुपूर्णवसुमतीत्रिदानफलमाप्नुयात् ।**
**ब्रह्मयज्ञादपि ब्रह्मदानमेवातिरिच्यते ॥**

सशैलवनसहितपृथिव्या वारत्रयदानस्य फलं प्राप्नोति । जपरूपात् **ब्रह्मयज्ञाद**ध्यापनरूपं **ब्रह्मदानं** मेधाधिकफलत्वादति**रिच्यते** ॥

ततश्चाध्यापनात्मकब्रह्मयज्ञो मुख्यः, तदभावे जप इति ॥

**इति ब्रह्मयज्ञ प्रकरणम् ।**

---

योरादित्यस्य सायुज्यं गच्छति" इति वाक्यसिद्धं फलमाह— **यं यमिति** ॥

**भूयस्त्वाल्पत्वाभ्यामिति** । तदुक्तम्—

"यस्य स्यात् कृच्छ्रभूयस्त्वं श्रेयसोऽपि मनीषिणः ।
भूयस्त्वं ब्रुवते तत्र कृच्छ्रात् श्रेयो ह्यवाप्यते ॥" इति ॥

जैमिनिनाऽप्यर्थवादाधिकरणे सूचितम्—

"फलस्य कर्मनिष्पत्तेस्तेषां लोकवत् परिमाणतः स्यात्" इति ॥

श्रुतिजपादध्यापनस्य मुख्यत्वं पूर्वं प्रतिज्ञातमुपपादयति— **ब्रह्मयज्ञादिति** ॥ ब्रह्मयज्ञप्रकरणमुपसंहरति— **ततश्चेति** ॥

**इति ब्रह्मयज्ञप्रकरणम् ।**

## अथ दक्षिणानिर्णयः तत्संप्रदाननिर्णयश्च ॥

**ब्रह्मणे दक्षिणा देया यत्र या परिकीर्तिता ।**
**कर्मान्तेऽनुच्यमानायां पूर्णपात्रादिका भवेत् ॥**

गौर्दक्षिणेति नामकरणान्नप्राशनचूडाकरणादिषु सूत्रोक्ता कस्मै देयेति चोक्तम् । तदाह— कर्मणि यदि दक्षिणोक्ता सा कर्मान्ते ब्रह्मणे देया, अनुपदिष्टायां तु दक्षिणायां— "कंसं चमसं वाऽन्नस्य पूरयित्वा कृतस्य वाऽकृतस्य वाऽपि वा फलानामेवैतं पूर्णपात्रमाचक्षते" इति सूत्रोक्तपूर्णपात्रादिरूपदक्षिणा भवेत् । आदिशब्दाद्दक्षिणालाभे "मूलानां फलानां दक्षिणा ददाती"ति मैत्रायणीयपरिशिष्टोक्तस्य ग्रहणम् । पूर्णपात्रालाभविषयत्वात् तद्वचनस्येति ॥

**यावता बहुभोक्तुश्च तृप्तिः पूर्णेन जायते ।**
**नावरार्ध्यं ततः कुर्यात् पूर्णपात्रमिति स्थितिः ॥**

यावताऽन्नादिना पूर्णेन पात्रेण कंसादिना बहुभोक्तुस्तृप्तिर्भवेत् न ततो हीनं पूर्णपात्रं कुर्यात् इति शास्त्रस्य स्थितिः, ततोऽधिकं तु न प्रतिषिध्यते ।

---

"गौर्दक्षिणा" इति यत्र यत्र गवादिदक्षिणा निर्दिष्टा तत्र यद्यपि का दक्षिणेति न संशयः ; तथाऽपि न यत्र तदुपदेशः तत्र तन्निर्णयोऽपेक्षित एवेत्यभिप्रायेणाह— **ब्रह्मण इति** । पूर्ण-पात्रलक्षणमाह— **यावतेति** । श्लोकं व्याचष्टे— **यावतेति** ॥

**चतुर्मुष्टिर्भवेत् कुञ्चिः कार्यश्चतुराधिक एव वा ।**
**मुष्टयोऽष्टौ भवेत् कुञ्चिः कुञ्चयोऽष्टौ तु पुष्कलम् ॥**
**पुष्कलानि च चत्वारि पूर्णपात्रं विधीयते ।**
**विदध्याद्धौत्रमन्यश्चेद्दक्षिणार्द्धहरो भवेत् ॥**
**स्वयं चेदुभयं कुर्यादन्यस्मै प्रतिपादयेत् ॥**

यदा यजमानान्यो होमकर्म करोति तदा स होतोक्तदक्षिणाया अर्द्धं गृह्णीयात् अर्द्धं च ब्रह्मा, यदा यजमान एव हौत्रं ब्रह्मत्वं च करोति तदाऽन्यस्मै दद्यात् । तमाह—

**कुलद्विजमधीयानं सन्निकृष्टं गुरुं तथा ।**
**नातिक्रामेत् सदा दित्सन् यदीच्छेदात्मनो हितम् ॥**

सन्निकृष्टमधीयानमिति द्वयं प्रत्येकं द्वाभ्यां संबध्यते । सदेति कर्माङ्गदक्षिणां विनाऽन्यस्मिन्नपि दाने दातुमिच्छन्न तौ लंघये-दिति ॥

**अहमस्मै ददानीति एवमाभाष्य दीयते ।**
**नैतावपृष्ट्वा ददतः पात्रेऽपि फलमस्ति हि ॥**

यदा तु गुरुकुलाद्विजः सन्निकृष्टोऽप्यमुष्मै प्रतिग्रहवैमुख्यादिना न दीयते तदा **अहमस्मै ददानीति** ततोऽप्यनुज्ञां गृहीत्वा-ऽन्यस्मै दद्यात् नान्यथा । शिष्टं सुगमम् ॥

---

सहोमके कर्मणि यद्यन्यो हौत्रं करोति तत्र किं तस्मै दक्षिणा न देयेत्यत आह—**विदध्यादिति** । पूर्णपात्रादिकं दक्षिणात्वेन यत उपदिष्टं तत इदमवगम्यते तस्मादन्यस्मै दानं विना न दक्षिणा

**दूरस्थाभ्यामपि द्वाभ्यां प्रदाय मनसा धनम्।**
**इतरेभ्यस्ततो दद्यादेष दानविधिः स्मृतः॥**

यद्यपि तौ दूरस्थौ तदापि तौ मनसोद्दिश्य सामान्यनामगोत्राभ्यां ताभ्यां धनमुत्सृज्यान्येभ्यो दद्यात्। एष दानविधिः स्मृतः। दानविधिः परः इति पाठे **परः** श्रेष्ठः इत्यर्थः। कालविधिः परः इति पाठे काले अयनादौ यो दानविधिः सोऽप्येवं विधः श्रेष्ठ इत्यर्थः॥

**सन्निकृष्टमधीयानं ब्राह्मणं यो व्यतिक्रमेत्।**
**यद्ददाति तमुल्लंघ्य तस्य स्तेयेन लिप्यते॥**

अन्येभ्योऽपि दाने सन्निहितमधीयानं यो लङ्घयेत् **यत्** द्रव्यं तमुल्लङ्घ्य **ददाति** तस्य स्तेयेन लिप्यते। तद्द्रव्यस्तेयपापं प्राप्नोति इत्यर्थः॥

**यस्य त्वेकगृहे मूर्खो दूरे चार्यगुणान्वितः।**
**गुणान्विताय दातव्यं नास्ति मूर्खे व्यतिक्रमः॥**

यस्य पुनः सन्निधौ मूर्खोऽस्ति पूज्यगुणैरध्ययनव्रतादिभिर्वाऽन्वितो दूरस्थः तस्मै गुणान्विताय दूरस्थाय दातव्यं न तु व्यतिक्रमदोषभयात् सन्निकृष्टाय मूर्खाय, यस्मान्मूर्खे व्यतिक्रमदोषो नास्ति इति॥

---

मिद्धातीति। यजमानस्यैव ब्रह्मत्वे होतृत्वे च सा दक्षिणा कथमुपयोक्तव्येत्यत आह—**यदा यजमान एवेति**। यदाऽप्यन्यस्मै देया तदाऽपि न यस्मै कस्मै चन विप्रकृष्टाय सन्निकृष्टाय वा श्रोचि-

ब्राह्मणातिक्रमो विप्रे नास्ति वेदविवर्जिते।
ज्वलन्तमग्निमुत्सृज्य नहि भस्मनि हूयते॥

अतो वेदविवर्जितब्राह्मणे व्यतिक्रमदोषो नास्ति; भस्मसदृशत्वात्, तस्यार्हस्य ज्वलदग्निसदृशत्वात्॥

इति दक्षिणा निर्णयः तदुद्देश्य निर्णयश्च समाप्तः।

---

अथ आज्यस्थाल्यादिस्वरूपनिर्णयः॥

आज्यस्थाली च कर्तव्या तैजसद्रव्यसंभवा।
माहेयी वापि कर्तव्या नित्यं सर्वाग्निकर्मसु॥

सर्वेष्वग्न्याधानादिकर्मरूपेषु होतव्याज्यस्थापनार्थं यः पिचर **आज्यस्थाली** एतावचरः, सुवर्णादिमयी कर्तव्या मृण्मयी वा,

---

याय मूर्खाय वा देया, किंतु सन्निहितश्रोत्रियायैव, न तु सन्निकृष्टायापि मूर्खायेत्यादिकमर्थं विशदं निरूपयति— **सन्निकृष्टमित्यादिना।** स्पष्टमितरत्॥

इति दक्षिणानिर्णयस्तत्संप्रदाननिर्णयश्च समाप्तः।

---

माहेयी। महीमयी वेति पाठान्तरम्। स्पष्टमन्यत्॥

इत्याज्यस्थाल्यादिस्वरूपनिर्णयः समाप्तः।

---

**नित्यं** सर्वदा, तदसंभवे शरावादिः । चरुहोमादिष्वपि व्याहृतिहोमोपस्तरणाभिघारणाद्यर्थमाज्योपयोगात्—**सर्वाग्निकर्म-स्वित्युक्तम्** ॥

**आज्यस्थाल्याः प्रमाणं तु यथाकामं तु कारयेत् ।**
**सुदृढामव्रणां भद्रां स्थालीमादाय मङ्गलाम् ॥**

**सुदृढां** पाकक्षमाम्, **भद्रां** सौम्यदर्शनाम्, **मङ्गलां** हस्त-घटिताम्, कुलालचक्रनिष्पन्नाया आसुरत्वेनामङ्गलत्वात् । तथाच वक्ष्यति—

**कुलालचक्रनिष्पन्नमासुरं मृण्मयं भवेत्** इति । एवं-भूतां स्थालीमुपादाय तस्या आज्यस्थाल्या यथेष्टं परिणामं कुर्यादिति ॥

**तिर्यगूर्द्ध्वं समिन्मात्रा दृढा नातिबृहन्मुखी ।**
**मृण्मय्यौदुम्बरी वापि चरुस्थाली प्रशस्यते ॥**

गर्भप्रस्तरदैर्घ्याभ्यां प्रादेशप्रमाणा चरुस्थाली प्रशस्ता भवति । **औदुम्बरी** ताम्रमयी, शेषं सुव्यक्तमिति ॥

**स्वशाखोक्तश्च सुस्विन्नो ह्यदग्धोऽकठिनः शुभः ।**
**न चातिशिथिलः पाच्यो न च वीतरसो भवेत् ॥**

---

**अवयवपर्यन्तत्वाच्छास्त्रस्येति** । तृतीयषष्ठचतुर्दशाधि-करणे हि—"व्रीहिभिर्यजेत" इति वाक्ये प्रतिनिधीनां नीवाराणा-मपि विधानं वर्तते वा नवेति सन्दिह्य संस्कारविधेः पूर्वं नीवा-

**सम्यग्विकसितो दाहशून्यः कोमलशोभनः ॥**

नातिविशीर्णावयवोऽकठिनः शुभ इति प्रसिद्धो **न वीतरसो** गलितमंड इत्यर्थः । स्वशाखोक्तस्रुः स्विन्न इति पाठान्तरम् ॥

**इध्मजातीयमिध्माङ्गप्रमाणं मेक्षणं भवेत् ।**
**वृत्तं चाङ्गुष्ठपृथ्वग्रमवदानक्रियाक्षमम् ॥**

इध्मजातीयं खदिरं पालाशं वाऽभावे सूत्रोक्तविभीतकादि-वर्जसर्ववनस्पतिमयं स्वप्रादेशप्रमाणं वर्तुळदण्डं वृक्षकाण्डनिर्मितं न तु शाखाभवं स्थूलाग्रं अवदानयोग्यं मेक्षणं भवेत् ॥

**एषैव दर्वी यस्तत्र विशेषस्तमहं ब्रुवे ।**
**दर्वी ह्यङ्गुष्ठपृथ्वग्रा तुरीयोनं तु मेक्षणम् ॥**

यादृशं मेक्षणं तादृश्येव दर्वी, किंतु दर्व्यां यो विशेषस्तमहं वदामि दर्वी मण्डलेन अङ्गुष्ठद्वयपृथ्वग्रा मेक्षणं चतुर्थभागोन-स्थूलाग्रमित्यर्थः ॥

**मुसलोलूखले वार्क्षे स्वायते सुदृढे तथा ।**
**इच्छाप्रमाणे भवतः शूर्पं स्वैषिक[१] एव वा ॥**

---

रादीनां साधनत्वानवगमात् न समानविधानमिति पूर्वपक्षश्च, सत्यं श्रीह्यभावे कर्मशास्त्रेणैव प्रतिनिधीनामाक्षेपः, एवमपि श्रीहिशास्त्रार्थपर्यालोचनवेलायामेव श्रीहित्वजातेर्यागसाधनत्वायो-गेन तदवच्छिन्नव्यक्तेः तदवयवानां च साधनत्वमाक्षिप्यते । अतश्च

---

(१) शूर्पं वैणवमेव चेति भट्टभाष्यादृतः पाठः ।

वार्क्षौं यज्ञियवारणवैकंकतवृक्षमये। "वारणो वैकंकतो वा यज्ञावचरः" इति वचनात्। नत्वेतेन जुहुयादिति श्रुतिबलात् होमकरणध्रुवोपभृज्जुहूस्रुवाणां "पर्णमयी जुहूः" इत्यादिबोधितवृक्षविशेषावरुद्धत्वात्। तदितरोलूखलादिष्वेव सामान्यविधिरूपवारणवाक्यपर्यवसानात्। ऐषिकः काशमयः। "शूर्पं वैणवमेव च" इति भट्टभाष्यलिखितम्। शेषं सुगमम्॥ एतेषाज्यस्थाल्यादिलक्षणैः "आज्यं चरुस्थाल्यौ मेक्षणं अथोलूखलमुसले प्रचाल्य शूर्पं च कांसं दर्वीमुदकं" इत्यादिसूत्रोक्तानामाज्यस्थाल्यादीनां स्पष्टीकरणं कृतमिति॥

दक्षिणं वामतो बाह्यमात्माभिमुखमेव तु।
करं करेण कुर्वीत करणे न्यस्तकर्मणः॥

भूमिजपानुष्ठाने दक्षिणं वामतः करेण वा कुर्यात् करेणेति षष्ठ्यर्थे तृतीया। करं करं इति पाठान्तरम्। दक्षिणहस्तमधोमुखं वामहस्तपृष्ठोपरिभावेन विपर्यस्तमात्माभिमुखं कुर्यादित्यर्थः॥

कृत्वाग्न्यभिमुखौ पाणी स्वस्थानस्थौ समाहितौ।
प्रदक्षिणं तथासीनः कुर्यात् परिसमूहनम्॥

---

जातिव्यक्त्यवयवसाधनतानां पूर्वमवगतानां सर्वासामसंभवे कतिपयावयवग्रहणस्योत्तरकालप्रतीतिकत्वेऽपि स्वरूपेण पूर्वमवगतेः समानविधित्वमुपपद्यते। न हि नीवारत्वेन रूपेण तेषामुपादानं, किंतु व्रीह्यारंभकावयवसमानजातीयावयवारब्धत्वादिति नीवारा-

"इमं स्तोममिति तृचेन परिसमूहेत्" इत्यनेन सूत्रेण अग्नेर्विच्छिन्नावयवानामेकीकरणं परिसमूहनमुक्तम् । तत्र करविन्यासमाह—अग्निपश्चिमतः आसीनस्ततस्त्वेव दिक्षु सम्यगग्नौ अग्न्यभिमुखौ न न्यस्तौ किंतु विसृतौ, तथैव विच्छिन्नावयवानामेकीकरणस्य स्फुटत्वात्, **स्वस्थानस्थौ** न भूमिजप इव न्यस्तौ करौ कृत्वा दक्षिणावर्तेन परिसमूहनं कुर्यात् ॥

**बाहुमात्राः परिधय ऋजवः सत्वचोऽव्रणाः ।**
**त्रयो भवन्त्यशीर्णाग्रा एकेषां तु चतुर्दिशम् ॥**

"परिधीनप्येके कुर्वन्ति शामीलान् पार्णान् वा" इति सूत्रेण कुशतत्प्रतिनिधेरभावे परिधयः स्तरणार्थे विहिताः । **शामीलान्** शमीमयान् । बाहुमात्राः परिधयः इत्यनेन तेषां स्पष्टीकरणं कृतम् । ते च त्रयो भवन्ति । एकेषां तु मते चतुर्दिशं चत्वारो भवन्तीति । शेषं सुगमम् । तेषां विन्यासप्रकारमाह—

**प्रागग्रावभितः पश्चादुदगग्रमथापरम् ।**
**न्यसेत् परिधिमन्यश्चेदुदगग्रस्य पूर्वतः ॥**

अग्नेः पार्श्वद्वये दक्षिणोत्तरतः परिधीन् विन्यसेत् । पश्चिमेनोत्तराग्रं अथोपरम् । चतुर्थं अन्यं यदि न्यसेत् तदा सोऽग्नेः पूर्वं उत्तराग्रमारोप्य इति ॥

---

दीनां प्रतिनिधीनामपि श्रौत्यवयवनिष्ठसाधनतासंपत्त्यर्थमवर्जनीयतयोपादनेऽप्यवयवसाधनतायाः संस्कारविधितः पूर्वं प्रमितत्वात् समानविधित्वोपपत्तिरिति सिद्धान्तितं भाट्टदीपिकायाम् । तथा

**यथोक्तवस्त्वसंपत्तौ ग्राह्यं तदनुकारि यत्।**
**यवानामिव गोधूमा व्रीहीणामिव शालयः॥**

व्रीहिद्रव्यालाभे यत्तत्सदृशं तदुपादेयम्। निदर्शनमाह— यवानां विहितानामलाभे गोधूमास्तत्सदृशा उपादीयन्ते। शरत्पकषष्टिकादीनामलाभे हैमन्तिकाः शालय उपादीयन्ते। एतच्च वचनं प्रतिनिध्यधिकरणन्यायमूलम्. अवयवपर्यन्तत्वात् शास्त्रार्थस्य; यवाऽवयवानां गोधूमेऽपि प्रत्यभिज्ञानादिति। यत्तु पैठीनसिवचनं "काण्डमूल पुष्पप्ररोहसुगन्धादीनां सादृश्यात् प्रतिनिधिं कुर्यात्— सर्वालाभेऽवयवः प्रतिनिधिर्भवती"ति, तत्र गन्धादिसादृश्येन प्रतिनिधिप्रतिपादनं न न्यायमूलं किंतु वेदमूलमेव। यत्र विहितद्रव्यावयवोपयोगः, तत्र हि प्रतिनिधिन्यायः। न काण्डं मूलं प्ररोहोऽङ्कुरस्योपयुज्यते।

---

च द्रव्यादिविधीनां सर्वेषामप्यवयवपर्यन्तत्वमेवेति "व्रीहीन् प्रोक्षति" इति वाक्यविहितप्रोक्षणादिसंस्कारोऽपि सिद्धो भवतीति सर्वमुपपन्नम्। व्रीहिगता एवाऽवयवाः प्रथमं साधनतया प्रतिपन्ना अपि न तद्व्रीहिगतत्वेन तेषां साधनत्वम्; अवहननादिना व्रीहिविनाशे तेषां तद्गतत्वाभावात्, किंतु व्रीहिजननयोग्यावयवत्वेनेति तत्त्वस्य नीवारावयवेष्वप्यविशेषात्नानुपपत्तिः। तत्र व्रीहिजननयोग्या एवाऽवयवा नीवारेष्वपि वर्तन्ते इत्यत्र किं प्रमाणमित्यत आह—

**यवावयवानां गोधूमेऽपि प्रत्यभिज्ञानादिति।** अनेन चाऽधिकरणेन अवयवानामिव तद्गन्धादीनां न साधनत्वं साध्यत

ततश्चायं शास्त्रार्थः— विहितद्रव्यालाभे प्रतिनिधिन्यायलभ्यस्य भूयोऽवयवसाम्येन तत्सदृशद्रव्यस्योपादानं तदलाभे काण्डादिना तत्सादृश्यस्य तस्याप्यलाभेऽवयवस्येति ॥ यत्तु— मैत्रायणी परिशिष्टं "दक्षिणालाभे मूलानां फलानां दक्षिणां ददाति, नत्वेवं यजेते"ति, न तत्र प्रतिनिधिन्यायः प्रवर्तते । यत्र हि अवघातादिविनष्टानां व्रीह्यादीनामवयवद्वारा साधनत्वं तत्रैवावयवसादृश्यादरः, दक्षिणायां तु न तथेति वाचनिकानामेव मूलानां भक्ष्याणां चोपादानम् । ततश्चैतदपि वचनं वेदमूलमेवेति । **नत्वेवं यजेत** इत्यस्य **एवं** दक्षिणां विना, न यजेतेत्यर्थः ॥

यथा दर्भास्तरणे काशः प्रतिनिधिः, तदभावे पर्ववतीभिरोषधीभिः शूकतृणशर-सुण्ठनल-बल्वजपलाशोशीरपवर्जम् ॥

अथेध्मार्थे पलाशाश्वत्थखादिररौहितकोदुम्बराणां तदलाभे सर्ववनस्पतीनां तिल्वकधव-नीप-निम्बकपित्थ-कोविदार-विभीतक-श्लेष्मातक-राजवृक्षरक्तकण्टकिवर्जम् । तिल्वकः श्वेतलोध्रः, **राजवृक्षः** प्रियालुः, कोविदारः काञ्चनः अबुविचन्ना इति प्रसिद्धः, **रक्तः** शोणः ॥

---

इति गन्धादिसादृश्येन प्रतिनिधिनिर्णयो नोक्तन्यायमूलकः, किंतु "यदि सोमं न विन्देत पूतीकानभिषुणुयात्" इतिवत् वचनमूलक एवेत्याह— **यत्तु पैठीनसीति** । पूर्वोक्तमर्थं निष्कर्षयति— **ततश्चेति** ॥

षष्ठाध्यायतृतीयपादे पूर्वमीमांसायां—"अदृष्टार्थानां न प्रति-

तथा व्रीहियः पुरोडाशस्यार्थे तदलाभे तु यववतीभिः तण्डुलवतीभिः पुरोडाशान् कुर्वन्ति अन्न चीन माष-मसूर-कोरक-कोद्रव-कोरदूष-वर्जम् । पुरोडाशान् पुरोडाशार्थान् वरक**चीनः** **कोरकः** पीतकुलत्थः, **कोरदूषः** वनकोद्रवः ॥

घृतमाज्यार्थे प्रतिनिधिः, तदलाभे दधि पयो वा तण्डुलपिष्टानि वा संसृज्याज्यार्थान् कुर्वन्ति ॥ यत्र घृतव्यतिरिक्तमाज्यं विहितं तत्र तदलाभे घृतमुपादेयम् । तथाच सूत्रं— "आज्यं संस्कुरुते सर्पिस्तैलं दधि यवागूश्चे"ति । तथा गोभिलीयं च—

घृतं वा यदि वा तैलं पयो वा दधि यावकम् ।
संस्कारयेद्यत्र चैष आज्यशब्दोऽभिधीयते ।

अत्र च यत्र न्यायतः प्रतिनिधिलाभः, तत्र न्यायमूलतैव । मैत्रायणीयवचनस्य त्वनुवाद वेदमूलतैवेति मन्तव्यम् ॥

---

निधिः, नियमादृष्टार्थानां तु प्रतिनिधिरस्त्येव, मुख्यसदृशानामपि निषिद्धानां न प्रतिनिधित्वम्, प्रतिनिध्यलाभे प्रतिनिधिसदृशं न गृहीतव्यम्, किंतु मुख्यसदृशमेव इत्यादिकं निरूपितमिति सर्वविदितमिदमिति तमिममर्थं मनसि निधाय कुशादिषु केषां प्रतिनिधित्वमित्यमुमर्थं निरूपयति— **यथेति । वर्जमिति** ॥

अत्र च— "विशिखानि प्रतिलूनाः कुशा बर्हिः", "उपमूललूनाः पितृभ्यः", "तेषामलाभे-शूकतृणशरोशीरबल्बजमुतवनल-शुण्ठवर्जम्", इति गोभिलसूत्रं प्रमाणम् ॥

न्यायेनापि सदृशमात्रे प्राप्ते यत्र सदृशविधिस्तत्र नियमार्थो विधिः— "यदि सोमं न विन्देत पूतीकानभिषुणुयात्" इतिवत् । तदास्तामलमतिविस्तरेण । प्रतिनिधितदपवादौ प्रतिनिधिकोष्ठ्यां द्रष्टव्यौ ॥

**इति प्रतिनिधिनिर्णयः ॥**

---

**अथेति । वर्ज्जमिति ।** अत्र च— "अथेध्मानुपकल्पयते खादिरान् वा पर्णान् वा", खदिरपलाशालाभे—विभीतकतिल्वकबाधकनीपनिम्बराजवृक्षशाल्मल्यरलुदधित्थकोविदारश्लेष्मातकवर्ज्जं सर्व्ववनस्पतीनामिध्मो यथार्थं स्यात्" इति सूत्रमनुसन्धेयम् । अत्र दधित्थपदेन कपित्थं शाल्मलिपदेन कण्टकस्य विवक्ष्यते इति बोध्यम् ॥

**इति प्रतिनिधिनिर्णयः ।**

## अथ श्राद्धकालनिर्णयः ॥

**पिण्डान्वाहार्यकं श्राद्धं क्षीणे राजनि शस्यते ।**
**वासरस्य तृतीयांशे नातिसन्ध्यासमीपतः ॥**

---

"यदहश्चन्द्रमा न दृश्यते ताममावास्याम्", "यदहश्चन्द्रमा न दृश्यते साममावास्यां कुर्वीत", इति सूत्रद्वयं गोभिलीयम् । तत्र प्रथममुपवासविधानपरम् । द्वितीयं पिण्डान्वाहार्यादि-विधानपरम् । तत्र पूर्वत्र चन्द्रानवलोकनं स्वरूपतो विवक्षितमिति कुहू ग्रहणम्, न सिनीवाल्याः, तस्यां खल्वालोक्यते चन्द्रमाः । उत्तरत्र तु चन्द्रक्षयो लक्ष्यते । अतएव न पौनरुक्त्यमित्यभिसंधाय द्वितीयसूत्रार्थं मनसि निधायाह— **पिण्डान्वाहार्यकमिति** । ननु अस्मिन् सूत्रे कस्मिन् मुहूर्ते अन्वाहार्यादिकं करणीयमिति नोक्तमिति कथं तृतीयांशे इति कात्यायनेन निष्कर्षः कृतः इत्यत आह— **तृतीये इति । स्मृत्युक्तापराह्ण इति च** । "अपराह्णे ददाति" "तस्मिन् क्षीणे ददाति" इति श्रुतिरप्यत्र अनुसन्धेया । तृतीयांशस्य कथमपराह्णत्वमिति शङ्कायामाह— **दिवसस्येति** ॥

न केवलं स्मृत्यैवापराह्णस्य पितृकालत्वं किं तु श्रुत्यापीत्याह— **पूर्वाह्ण इति** । "नाति सन्ध्यासमीपतः" इति भागं व्याचष्टे— **पञ्चदशेति** । अत्र च वक्ष्यमाणं—

"मायाह्नस्त्रिमुहूर्तः स्यात्तत्र श्राद्धं न कारयेत् ।
राक्षसी नाम सा ज्ञेया गर्हिता सर्वकर्मसु ॥"

पिण्डपितृयज्ञीयपिण्डानामन्वाहार्यं पश्चादनुष्ठीयमानं श्राद्धं दर्शश्राद्धमिति यावत् । तत् **क्षीणे राजनि** चन्द्रे प्रशस्तम् दिवसस्य पञ्चदशमुहूर्तात्मकस्य **तृतीये** मुहूर्तपञ्चके स्वत्वपराह्णे ।

तथाहि— "पूर्वाह्णो वै देवानां मध्यन्दिनं मनुष्याणां अपराह्णः पितॄणामि"ति तथापि त्रिविधो विभागोऽवगम्यते । **रात्रि-सन्ध्यासमीपं** पञ्चदशमुहूर्तरूपं वर्जयित्वा । पिण्डपितृय-

---

इति मत्स्यपुराणवचनं प्रमाणम् । ननु—पूर्वोक्तस्मृतिश्रुत्यादिभिरन्वाहार्यस्यापराह्णकालत्वेऽप्यपराह्णकालस्य द्वितीयांश एवोपक्रमात् तत्राऽपि करणं युज्यते । तदुक्तं मत्स्यपुराणे—

"प्रातःकाले मुहूर्तांस्त्रीन् सङ्गवस्तावदेव तु ।
मध्याह्नस्त्रिमुहूर्तः स्यादपराह्णस्ततः परम् ॥" इति ॥

तथाच तृतीयांश इत्यवधारणमत्र नोपपद्यते इत्यत आह—

**पिण्डपितृयज्ञेति** ॥

तथाच पिण्डपितृयज्ञस्यान्वाहार्यस्य च पौर्वापर्यादुभयोरप्यपराह्णकालत्वे दशममुहूर्तमारभ्य तस्यानुष्ठानेऽन्वाहार्यस्य तृतीयांश एवानुष्ठानं पर्यवस्यतीति न दोष इति भावः । ननु-एतावता पिण्डान्वाहार्यमिति समाख्यैव तस्य तदानन्तर्यं गमयतीति फलितम्, न चैतदुपपद्यते; तस्याः समाख्याया अन्यथाऽपि वक्ष्यमाणरीत्या संभवादित्याशंक्य न वयं समाख्यामात्रेण तदानन्तर्यं वदामः, किंतु—

ज्ञानन्तर्यांचास्य श्राद्धस्यान्वाहार्यसंज्ञा । अत एव पिण्डपितृय-ज्ञानन्तरमेव दर्शश्राद्धम् । अन्यथा रूढिकल्पनापत्तेरिति न वाच्यम्, अन्यथान्वा(हार्य)ख्याया वक्ष्यमाणत्वात् । क्लृप्तयोगस्यैव पङ्कजादौ रूढ्युपवादकता दृष्टा, न तु कल्प्यस्य, ततश्च न योगबलेनैव दर्शस्य पिण्डपितृयज्ञोत्तरत्वम्, किंतु मनुवचनादेव । तथाहि वचनम्—

**"पितृयज्ञं तु निर्वर्त्य विप्रश्चन्द्रक्षयेऽग्निमान् ।**
**पिण्डान्वाहार्यकं श्राद्धं कुर्यान्मासानुमासिकम् ॥"**

**इति ।**

---

"पितृयज्ञं तु निर्वर्त्य विप्रश्चन्द्रक्षयेऽग्निमान् ।
पिण्डान्वाहार्यकं श्राद्धं कुर्यान्मासानुमासिकम् ॥"

इति मनुवचनादेवेत्याह— **अन्यथेति** ॥

ननु केवलयोगार्थस्यातिप्रसक्तत्वात् पङ्कजशब्दस्येव योगरूढत्वा-ङ्गीकार एव युक्त इति समाख्ययाऽपि क्रमोऽत्र विवक्षितुं शक्यते इत्यत आह— **क्लृप्तप्रयोगस्यैवेति** । तथाच नाऽत्र योगरूढित्व-मिति भावः । ननु— "पितृयज्ञं तु निर्वर्त्य" इति मनुवचनेऽपि पितृयज्ञानन्तर्यमेवान्वाहार्यस्योक्तम्, न तु पिण्डपितृयज्ञानन्तर्यम् । पितृयज्ञस्य "पितृयज्ञस्तु तर्पणम्" इति वचनात् केवलपितृतर्पणमेव पितृतर्पणं चोक्तं ब्रह्मयज्ञानन्तरं मध्याह्नकाले प्रातराहुत्यनन्तरं वा संभवतीत्यन्वाहार्यस्य तृतीयांशकालत्वोक्तिः कथं संगच्छते ? इत्याशयेन शङ्कते— **नन्विति । पितृतर्पणमिति** ॥

**ननु**— अत्र पितृयज्ञशब्देन न पिण्डपितृयज्ञोऽभिधीयते, किंतु पितृतर्पणम्,

"पितृयज्ञं तु निर्वर्त्य तर्पणाख्यं द्विजोऽग्निमान् ।
पिण्डान्वाहार्यकं श्राद्धं कुर्यादिन्दुक्षये सदा ॥"

इति मत्स्यपुराणवचनात् । न च— स्नातस्य श्राद्धविधानात्तर्पणानन्तर्यं न विधेयमिति— वाच्यम्; सत्यम्, किंतु पार्वणश्राद्धे कर्तव्ये साग्निना तर्पणेनैव पञ्चयज्ञान्तर्गतपितृयज्ञस्य निर्वर्तितत्वात् न

---

ननु-- उक्तमनुवचने पितृयज्ञपदेन कथं पितृतर्पणमेव विवक्षितमित्यत आह— **पितृयज्ञं तु निर्वर्त्य तर्पणाख्यमिति** । उक्तवचनयोरेकार्थत्वात्—

"सामान्यविधिरस्पष्टः संह्रियेत विशेषतः ।"

इति न्यायेन "पुरोडाशं चतुर्धा करोति" इत्यत्र पुरोडाशपदस्य "आग्नेयं चतुर्धा करोति" इति वाक्योपसंहारेणाग्नेयपुरोडाशमात्रपरत्ववदत्रापि मनुवचने तर्पणाख्यपितृयज्ञविवक्षैव सिद्धेति भावः ॥

ननु— उक्तवचने पितृतर्पणपदेन स्नानाङ्गतर्पणं विवक्ष्यते वा' उत पञ्चमहायज्ञान्तर्गतपितृतर्पणं वा, नान्त्यः; "न पितॄणां तथैवाऽन्ये" इति साग्नेः श्राद्धानन्तरं पितृतर्पणादीनां निषेधात्, उक्तवचनस्य साग्निविषयत्वस्य वक्ष्यमाणत्वात् । नाऽऽद्यः; स्नातस्यैव श्राद्धविधानेन तदानन्तर्यस्याविधेयत्वादिति शङ्कते— **न चेति** । अत्र च स्नानाङ्गतर्पणस्यैव विवक्षा नाऽन्यस्य । एवं च महाय-

श्राद्धानन्तरं पित्र्यबलिनित्यश्राद्धयोरनुष्ठानमिति वचनार्थः । अन्यथा तूभयोरपि पितृयज्ञरूपत्वात् अनुष्ठानं प्रसज्येत । तथाहि— "पितृयज्ञस्तु तर्पणं" इति छन्दोगपरिशिष्टकृतोक्तम्. श्राद्धं वा पितृयज्ञः स्यात् पित्र्योर्बलिरथापि वेति"च ॥ वाशब्द-स्त्वर्थे । अग्निमानिति विशेषणोपादानात् निरग्निना पार्वणदिने-ऽपि तदनन्तरं पित्र्यबलिनित्यश्राद्धे कर्तव्ये । अत एव श्राद्धोत्तर-कर्माधिकारे मार्कण्डेयपुराणम्—

"नित्यक्रियां पितॄणां तु केचिदिच्छन्ति सत्तमाः ।
न पितॄणां तथैवान्ये पृथक् पूर्ववदाचरेत् ॥"
पृथक् पाकेन चेत्यन्ये केचित् सर्वं च पूर्ववत् ॥" इति ॥

---

श्राद्धान्तर्गतपितृतर्पणादिकं पितृबल्यादिकं च न साग्नेः श्राद्धानन्तरं कर्तव्यम् । प्रश्नस्यैवानन्तर्यस्य पुनर्विधानं त्वनन्तरं तर्पणान्तराभाव-द्योतनार्थमिति नोक्तशङ्कावसर इत्याशयेन समाधत्ते—सत्यमिति । अत्र चाग्निमत एव तर्पणानन्तर्यस्य विधानादनग्निमतां श्राद्धानन्तर-मपि पितृतर्पणादि पितृबल्यादिकं च कर्तव्यमेवेति प्रकृतविषय-मुपसंहरति— **अग्निमानितीति** । एतावताऽधिकारिभेदेन व्यव-स्थितविकल्पेन श्राद्धानन्तरमपि तर्पणकर्तव्यत्वतदभावौ यौ बोधितौ तत्र प्रमाणमाह— **नित्यक्रियामिति** ॥

एतेन—

"पितृश्राद्धमकृत्वा तु वैश्वदेवं करोति यः ।
अकृतं तत् भवेच्छ्राद्धं पितॄणां नोपतिष्ठते ॥"

अयं हि विकल्प उक्तन्यायात् साग्निनिरग्निव्यवस्थितः। अत एव मत्स्यपुराणे श्राद्धोत्तरकर्माधिकारे—

"निर्वर्त्य प्रणिपत्याथ पर्युक्ष्याग्निं स मन्त्रवित्।
वैश्वदेवं प्रकुर्वीत नैत्यिकं बलिमेव च॥"

इति नित्यश्राद्धं नोक्तमेव। तथा साग्नेरन्वाहार्यश्राद्धानन्तरं—

"यदा श्राद्धं पितृभ्यश्च कर्तुमिच्छति मानवः।
वैश्वदेवं ततः कुर्यात् निवृत्ते पितृकर्मणि"

इत्युक्तम्। मनुनापि साग्निकर्तव्यश्राद्धोत्तरकर्मणि।

"उच्छेषणं तु तत्तिष्ठेत् यावाद्विप्रान् विसर्जयेत्।
ततो गृहबलिं कुर्यादिति धर्मो व्यवस्थितः॥"

---

"निर्वर्त्य प्रणिपत्याथ पर्युक्ष्याग्निं च धर्मवित्।
वैश्वदेवं प्रकुर्वीत नैत्यकं बलिमेव च॥"

"कृत्वा श्राद्धं महाबाहो ब्राह्मणांश्च विसृज्य च।
वैश्वदेवादिकं कर्म ततः कुर्यान्नराधिप॥"

"यदा श्राद्धं पितृभ्यश्च कर्तुमिच्छति मानवः।
वैश्वदेवं ततः कुर्यान्निवृत्ते पितृकर्मणि॥"

इति गौतममत्स्यपुराणभविष्यपुराणवचनानि निरग्निविषयाणि,

"उच्छेषणं तु तत्तिष्ठेत् यावद्विप्रा विसर्जिताः।
ततो गृहबलिं कुर्यादिति धर्मो व्यवस्थितः॥"

"पितृयज्ञं तु निर्वृत्य तर्पणाख्यं द्विजोऽग्निमान्।
न पितॄणां तथैवाऽन्ये शेषं पूर्ववदाचरेत्॥"

इति काम्या गृहबलय एव उक्ता न पित्रोर्बलिर्नवा नित्यश्राद्धमिति। ततश्च मनुवचनात् न पिण्डपितृयज्ञानन्तरं दर्शश्राद्धं कुर्यात्— इति॥

अत्रोच्यते, मनुवचनेऽपि पितृयज्ञशब्दस्य तर्पणपरत्वे मत्स्यपुराणवचन इवानन्तर्यार्थस्य प्राप्ततया विध्यसंभवे नित्यश्राद्धादिपितृयज्ञ-

---

इति मनुभविष्यपुराणवचनानि साग्निगोचराणि व्याख्यातानि॥ अत्रोच्छेषणमिति वाक्ये गृहबलिमात्रकर्तव्यत्वमुक्तं, न पितृबलिकर्तव्यत्वमपि। स्मृत्यन्तरे हि—

"स्वयमेव हरेत् काम्यान् बलीन् यावद्गृहे वसेत्।
आतुरत्वे प्रवासे वा लोपो गृहबलेर्भवेत्"॥ इति॥

अत्र गृहबलिशब्देन काम्यबलीनामेव विवक्षणं कृतम्। यावद्गृहावस्थानं काम्यबलिकर्तव्यत्वमुक्त्वा विवासे गृहबलिलोपवर्णनं हि न काम्यबल्यतिरिक्तस्य गृहबलिशब्देन विवक्षणे संभवति। एतेन— नित्यबलेरपि गृहबलिशब्देन विवक्षणम्, न काम्यबलिमात्रस्य; प्रमाणाभावादिति गोभिलभाष्ये तर्कालङ्कारमहाशयोक्तं चिन्त्यमिति— सूचितम्॥

यदुच्च गोभिलभाष्ये तर्कालङ्कारमहाशयैः— साग्निना तर्पणेन पितृयज्ञस्य निर्वर्तितत्वात् श्राद्धानन्तरं पित्र्यबल्याद्यनुष्ठानं नेति परिशिष्टप्रकाशोक्तिर्न सङ्गताः पित्र्यबलेः नित्यत्वादित्युक्तं तत् नित्यस्याऽपि पित्र्यबलेः साग्निविषये पूर्वोक्तवचनेन परिसंख्यानात् चिन्त्योपपत्तिकमित्यलं विस्तरेण॥

निवृत्त्यर्थता वाच्या। तथाच श्रुतहानिरश्रुतकल्पना च स्यात्। मत्स्यपुराणवचनेऽनन्यगतेस्तु तथा। तस्मान्मनुवचने श्रुतहान्यश्रुतकल्पनापरिहाराय पिण्डपितृयज्ञानन्तर्यमेव विधेयम्। अस्तु वा "पितृयज्ञं तु"इत्यस्य मनुवचनस्य तर्पणपरता; तथापि—

"पिण्डानां मासिकं श्राद्धमन्वाहार्यं विदुर्बुधाः"

इत्यस्मात् पिण्डपितृयज्ञानन्तर्यमस्तु मासिकाख्यदर्शश्राद्धस्य। यदि वाऽस्यापि मनुवचनस्य—

"तत्र ते पितरः पूर्वं पिण्डसंज्ञां तु लेभिरे।
एषा तस्याः स्थितिर्विप्र पितरः पिण्डसंज्ञिताः।

---

तथा साग्नेरिति। एतेन— "निवृत्य प्रणिपत्याऽथ" इत्यस्य निरग्निविषयत्वं सूचितमिति परिशिष्टप्रकाशकारमते न किमपि वचनमविरुद्धं भवति। तर्कालङ्काराणां तु—

"पितृपाकात् समुद्धृत्य वैश्वदेवं करोति यः।
असुरं तत् भवेत् श्राद्धं पितृणां नोपतिष्ठते॥
न पितृणां तथैवाऽन्ते शेषं पूर्ववदाचरेत्॥"

इत्यादिवचनानि विफलानि भवेयुः। समविकल्पापेक्षया व्यवस्थितविकल्पाङ्गीकारे तु लाघवं भिन्नशाखास्थविधिनिषेधयोरिवेति सर्वमनवद्यमिति भावः॥

ननु— उक्तरीत्या नित्यश्राद्धेऽपि साग्नेर्वैश्वदेवाकरणापत्तिरित्यत आह— नित्यश्राद्धमिति। पार्वणश्राद्धप्रकरणादिति भावः। अत एव—

लभन्ते सततं पूजां वृषाकपिवचो यथा ॥"

इति मत्स्यपुराणमहाभारतवचनद्वयात् पिण्डानां मासिकं मासैकतृप्तिजनकं श्राद्धम्; "अन्वाहार्यं मासिकं स्यात् इत्यभिधानात्, ततश्च पिण्डानां पितॄणामन्वाहार्यं मासैकतृप्तिजनकं अन्नमस्मिन्निति पिण्डान्वाहार्यकं श्राद्धमित्यर्थः। एतस्मिंश्चार्थे निरग्निपत्तेऽपि संज्ञाप्रवृत्तिः इत्यालोच्यते, तदाऽन्यदपि मत्स्यपुराणे प्रवृत्तिनिमित्तमुक्तम्।

"यस्माद्भुलाऽस्यतो मात्रा भक्षयन्ति द्विजातयः।
अन्वाहार्यकमित्युक्तं तस्माच्चन्द्रपरिचये।" इति ॥

---

"नित्यश्राद्धे गयाश्राद्धे तीर्थश्राद्धे तथैव च।
वैश्वदेवं कुर्वदादौ ततः श्राद्धं समाचरेत् ॥"

इति स्मृतिरुपपद्यते। सर्वथा च पितृयज्ञपदस्य पितृतर्पणपरत्वात् पिण्डपितृयज्ञानन्तर्यमन्वाहार्यस्य सिद्धमिति शङ्कामुपसंहरति— **ततश्चेति ॥**

युक्तं मत्स्यपुराणवचनस्योक्तरीत्या सार्थक्यादिकं तर्पणाख्यपितृतर्पणपरत्वं च, मनुवचनेऽपि तादृशपितृयज्ञस्यैव विवक्षणे तु न मानम्। न हि पिण्डपितृयज्ञात् पूर्वमन्वाहार्यश्राद्धं वाक्यान्तरेण विहितम्, येन प्रमाणान्तराविरोधार्थं तथा व्याख्यायेत। एतेनोपसंहारोऽपि परास्तः;

"सामान्यविधिरस्पष्टः संह्रियेत विशेषतः।"

इति न्यायो हि सामान्यविधेरस्पष्टत्व एव प्रवर्तते। न चात्र मनुवचनमस्पष्टम्; पितृयज्ञपदेन पिण्डपितृयज्ञस्य स्पष्टं प्रतीतेः,

अस्यार्थः— बह्वृचानां पिण्डदानानन्तरं ब्राह्मणभोजनार्थं पिण्डानां स्वल्पभागोऽन्वाहार्यं क्रियते । ततश्चान्वाहार्यमाहरणीयमल्पखण्डं ब्राह्मणभोजनार्थं यस्मिन्निति पिण्डान्वाहार्यकम् । अन्यार्थे कः । तस्मात् पिण्डदानादनन्तरं पश्चादन्वाहार्यमनुष्ठेयं श्राद्धं ब्राह्मणभोजनात्मकं पिण्डान्वाहार्यकमित्यपि प्रवृत्तिनिमित्तं संभवति । तथाच दशममुहूर्तस्यापराह्णत्वेऽपि तस्य तृतीयांशे एकादशमुहूर्ताद्ये यत् श्राद्धविधानं तद्दशममुहूर्तेऽपराह्णे पिण्डपितृयज्ञं सूचयति । तथाच श्रुतिः— "अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्ति" इति ॥

---

प्रयोजनभेदाभावाच्च । न ह्यचानुपसंहारे साग्नेरपि श्राद्धानन्तरं पित्र्यबल्यादिप्रसङ्गशङ्का भवति; उच्छेषणं तु" इति मनुवचनेन काम्यबलिमात्रविधानेनैव पित्र्यबलिव्यावृत्तिसिद्धेः । एतेन— मत्स्यपुराणवचनवैषम्यमपि—सूचितम् । मत्स्यपुराणे हि— "निर्वर्त्य प्रणिपत्याऽथ" इति श्लोकेन सामान्यतो वैश्वदेवस्य श्राद्धानन्तरं कर्तव्यत्वं बोधितमिति विशेषत आहिताग्निविषये पित्र्यबल्यादिनिरासोऽपेक्षितः । एवं चापेक्षितक्रमबोधकत्वं मनुवचने पिण्डपितृयज्ञविवक्षणे संभवति, पितृतर्पणविवक्षणे त्वनपेक्षितनिष्प्रयोजनक्रमबोधकत्वमिति मनुवचनगतपितृयज्ञपदस्य पिण्डपितृयज्ञपरत्वमेव युक्तमिति मनुवचनादेवान्वाहार्यस्य पिण्डपितृयज्ञानन्तर्यमिति युक्तमित्यभिप्रायेणोक्तामाशङ्कां परिहरति— **यच्चोच्यते इति** ॥

अत्र हि पारिभाषिकाऽपराह्णस्यैव ग्रहणम्। संज्ञाविधेरेव प्रयोजनं यत्तु संज्ञाया विधानमुद्देशनं वा। तदुक्तं— "नामापि गुणफलसम्बन्धपरत्वेन सार्थकमिति। पारिभाषिकस्त्वपराह्णो मत्स्य-पुराणे उक्तः—

"प्रातःकालो मुहूर्त्तांस्त्रीन् संगवस्तावदेव तु।
मध्याह्नस्त्रिमुहूर्त्तः स्यादपराह्णस्ततः परम्।
सायाह्नस्त्रिमुहूर्त्तः स्यात् श्राद्धं तत्र न कारयेत्।
राक्षसी नाम सा ज्ञेया गर्हिता सर्वकर्मसु॥" इति॥

---

उक्तमनुवचनगतस्य पितृयज्ञपदस्याऽप्यभ्युपगम्याऽपि तर्पणपरत्वं दर्शस्य पिण्डपितृयज्ञानन्तर्यमाह— **अस्तु वेति। पिण्डानामिति।** पिण्डविशिष्टपितृयज्ञस्येत्यर्थः। यद्यपि पिण्डशब्दस्य पितृदेवता-परत्वमेव न यज्ञपरत्वमित्युच्यते, एवमपि मत्स्यपुराणगतवच-नान्तरेण तत्प्रवृत्तिनिमित्तान्तरनिरूपणपरेण पिण्डपितृयज्ञानन्तर्य-मन्वाहार्यस्य सिद्ध्यतीत्याह— **तदाऽन्यदपीति॥**

उक्तवचनं व्याचष्टे— **अस्यार्थ इति।** अनेन दर्शस्य पिण्ड-पितृयज्ञानन्तर्यसिद्धिप्रकारमाह— **तस्मादिति।** ननु— उक्त-वचनानां सर्वेषामपि यथाकथंचिदन्यार्थपरत्वं कथं न संभवतीत्यत आह— **तथाचेति।** कात्यायनाचार्यैः— "पिण्डान्वाहार्यकं श्राद्धं" इति श्लोके तृतीयांशे इति पदनिवेशादवगम्यते तैरुक्त-वचनादीनां सर्वेषामपि पिण्डपितृयज्ञानन्तर्यस्यान्वाहार्यश्राद्धे बोधन एव तात्पर्यं गृहीतमिति महर्षिकल्पाचार्याहृतं व्याख्यान-

एवंच साग्नेर्निरग्नेश्चायमेवापराह्णोऽमावास्याश्राद्धे मुख्यः कालः। तथाच यमः—

"पक्षान्ते निर्वपेत्तेभ्यो ह्यपराह्णे च धर्मवित्।
अपां समीपे दूर्वासु दर्भेषु सिकतासु च॥

तेभ्यः पितृभ्यः पितरोऽस्मद्गृह्णन्ति" इत्यत्रैव प्रकरणे यमेनोक्तत्वात्। दर्भेषु दर्भमयेषु। एवं सिकतास्वपि। तथा श्रुतिरपि—"पूर्वाह्णो वै देवानां मध्यन्दिनं मनुष्याणां अपराह्णः पितृणाम्" इति। तथाच—

"पूर्वाह्णे मातृकं श्राद्धमपराह्णे तु पैतृकम्।
एकोद्दिष्टं तु मध्याह्ने प्रातर्वृद्धिनिमित्तकम्।"

---

मेवाऽत्राऽऽदरणीयं न स्वबुद्धिकल्पितं व्याख्यानमिति पिण्डपितृयज्ञानन्तरमेवान्वाहार्यानुष्ठानमिति सिद्धम्॥

अमावास्यायामपराह्ण एव पिण्डपितृयज्ञोऽपि करणीय इत्यत्र श्रुतिं दर्शयति— तथाचेति। ननु उक्तश्रुतौ अपराह्णपदेन कोऽर्थः परिगृह्यते? यदि अह्नोऽपरो भाग इति सार्धद्वादशमुहूर्तानन्तरभागो गृह्यते योगार्थमवलम्ब्य, तर्हि पिण्डपितृयज्ञस्याऽपि तृतीयांश एव कर्तव्यत्वात् दशममुहूर्तस्यापराह्णत्वेऽपि तस्य तृतीयांश एव विधानं दशममुहूर्तेऽपराह्णविधानं सूचयतीति परिशिष्टप्रकाशोक्तिरसङ्गतेत्याशङ्क्याह— अत इति॥

ननु— अत्र पारिभाषिकस्यैव ग्रहणं कुत इत्यत आह— संज्ञाविधेरेवेति। यथा हि— "प्राचीनप्रवणे वैश्वदेवेन यजेत

इति ब्रह्मपुराणेऽपि स एवापराह्णो विधीयते। **मातृक-मन्वष्टकाश्राद्धं, पैतृकं** पार्वणं कृष्णपक्षविहितम्। शुक्लपक्षे च पार्वणं पूर्वाह्ण एव। तथा च वायुपुराणम्—

---

इत्यादौ पारिभाषिकस्य वैश्वदेवस्य प्राचीनप्रवणदेशसंबन्धार्थं विधानम्, अन्यथा केवलविश्वदेवदेवताकामिक्षायागमात्रस्य तत्संबन्धः स्यादिति "वैश्वदेवेन यजेत" इत्यादौ वैश्वदेवादिपदं नामधेयम्, एवमत्राऽपि अपराह्णशब्देनान्यस्य ग्रहणं न भवेदित्येतदर्थमेव परिभाषा कृतेति नाऽन्यस्याऽर्थस्यात्र ग्रहणप्रसक्तिरिति भावः। नामधेयं हि यत्र स्वार्थस्य विधेयत्वं तत्र फलसंबन्ध उपयुज्यते, यत्र तूद्देश्यत्वं तत्र गुणसंबन्धे उपयुज्यत इति तस्य न विधेयत्वमेव, किं तूद्देश्यत्वमपीति प्रकृतेऽपराह्णस्योद्देश्यत्वेऽपि पारिभाषिकस्यैव ग्रहणं, न योगार्थस्य। तदिदमाह— **तदुक्तमिति**। कः स पारिभाषिकापराह्णपदार्थ इत्यत आह— **पारिभाषिकस्येति**॥

एतावता प्रपञ्चेन साग्नेः श्राद्धानन्तरं पित्र्यादिवस्यकर्तव्यत्वं निरग्नेस्तदनन्तरमपि तत्कर्तव्यत्वमित्यादिनिरूपणपूर्वकं पिण्डपितृ-यज्ञानन्तर्यमन्वाहार्यस्य निरूपितम्। एवं च वैश्वदेवादिकर्तव्य-त्वादिविषये साग्निनिरग्न्योर्विशेषेऽप्यपराह्ण एव पिण्डपितृयज्ञा-नुष्ठानमुभयोरपि समानमेव। "पितृयज्ञं तर्पणाख्यं" इति श्लोके अग्निमच्छब्दानुसारेण तथा व्यवस्थापनेऽपि पिण्डान्वाहार्य-कमित्यस्य सामान्यतः प्रवृत्तत्वात् नाऽत्र कोऽपि विशेष इत्युप-संहारव्याजेन सूचयति— **एवंचेति**। अपराह्ण एव मुख्यकाल

"शुक्लपक्षस्य पूर्वाह्णे श्राद्धं कुर्याद्विचक्षणः ।
कृष्णपक्षेऽपराह्णे तु रौहिणं तु न लङ्घयेत् ॥" इति ।

**रौहिणं** रोहिणीनक्षत्रसंबन्धिनं मुहूर्तं पूर्वाह्णश्राद्धकर्ता **न लङ्घयेत्** नातिक्रमेत्, अत ऊर्ध्वं न कुर्यादित्यर्थः । एवं

---

इत्यत्र यमवचनमपि प्रमाणयति— **तथाच यम इति** । तेभ्यः इति पदं व्याचष्टे— **पितृभ्य इति** । कुतः पितॄणामेव ग्रहणम्? प्रकरणात्, इत्याह— **पितर इति** । पारिभाषिकस्यैवाऽपराह्णस्य श्रुतिषु ब्रह्मपुराणादौ च निर्देश इत्याह— **तथा श्रुतिरपीति** । मातृकादिपदं व्याचष्टे— **मातृकमिति** । वायुपुराणवचनमप्युदाहरति— **शुक्लपक्षस्येति** । "रौहिणं तु न लंघयेत्" इत्यस्य पूर्वार्धेऽप्यन्वयेन व्याचष्टे— **रौहिणमिति** । रौहिणानतिक्रमणमुभयत्र निष्कृष्य प्रतिपादयति— **एतेनेति** ॥

"न तु रौहिणं" इत्यस्य वायुपुराणस्थस्य ब्रह्मपुराणस्थेनैकोद्दिष्टेनान्वयो नाऽस्तीत्याह— **न त्विति** । ननु— केयमपूर्वा शङ्का यत्पुराणान्तरस्थस्य पदस्य पुराणान्तरेणान्वय इति? यत्परिहारार्थं नत्विति ग्रन्थः प्रवृत्तः इति चेदयमाशयः—

"शुक्लपक्षस्य पूर्वाह्णे श्राद्धं कुर्याद्विचक्षणः ।"

इति वाक्ये हि श्राद्धपदस्य ब्रह्मपुराणैकवाक्यतयैव पार्वणाष्टकादिरूपत्वं वक्तव्यमिति तदेकवाक्यतया वाक्यार्थनिर्णयेऽपेक्षिते रौहिणं त्वित्यस्यैकोद्दिष्टेनाऽप्यन्वयो वर्तते इति हि शङ्का स्यादेव । परिहाराशयस्त्वयं यन्निर्णयार्थं एकवाक्यता तदंशानामेव पुराणान्तरस्थानां पुराणान्तरेणोपसंहारः । न च रौहिणमिति वाक्य-

अपराह्णश्राद्धकर्तापि न लङ्घयेत् अतः पूर्वं श्राद्धं न कुर्यादित्यर्थः। एतेनेदमुक्तं रौहिणे पूर्वाह्णे समाप्तिरपराह्ण उपक्रमः, ततश्च द्व्यात्मको रौहिणः, न तु "रौहिणमि"त्येतस्यैकोद्दिष्टविषयता; एतद्वचनानुपात्तत्वेनाप्रकृतत्वादेकोद्दिष्टस्येति ।

---

भागार्थनिर्णयो ब्रह्मपुराणवाक्यैकवाक्यतां स्वार्थविनिर्णयार्थमपेक्षते इति न काप्यनुपपत्तिः । एवं च सर्वत्रापराह्णपदेन पौराणिकापराह्णस्यैव ग्रहणमिति सिद्धम् ।

यत्तु—गौभिलभाष्ये तर्कालङ्कारमहाशयैः वासरतृतीयांश एव श्रौतोऽपराह्णः, स एव श्रुत्यर्थनिर्णये स्वीकरणीयः, न तु पारिभाषिकापराह्णस्य "अमावास्यायां पिण्डपितृयज्ञेन चरन्ति" इत्यादौ ग्रहणमित्युक्तम्, तदेतेन—परास्तम्; "पिण्डान्वाहार्यकं श्राद्धं" इति वाक्ये हि तृतीयांशो यो गृहीतः स न तस्यैवाऽपराह्णत्वाभिप्रायेण, किंतु तस्य पिण्डपितृयज्ञानन्तरमनुष्ठेयत्वाभिप्रायेण । अन्वाहार्ये तु—"अमावास्यायां द्वितीयं यत् तदन्वाहार्यमुच्यते" इति गृह्यान्तरवचनेन पिण्डपितृयज्ञानन्तरमेव कर्तव्यमिति तैरपि प्रतिपादितमेव । अतस्तस्यैव मुख्यत्वे तृतीयांशात् पूर्वतनस्य पिण्डपितृयज्ञस्य अपराह्णकालसंबन्ध एव न स्यादिति बहुव्याकुलता भवेत् । कालस्य हि प्रधानहोमसंबन्धमात्रमेवापेक्षितं नत्वङ्गसंबन्धोऽपीति, "अङ्गगुणविरोधे च तादर्थ्यात्" इति न्यायेन निरूपितमिति न पौराणिकापराह्णभागातिरिक्तस्याऽपि तत्र ग्रहणमित्याद्यन्यत्र विस्तृतम् ॥

ततश्चायं शास्त्रार्थो व्यवस्थितः— कृष्णपक्षविहितं सर्वमेव पार्वणं निरग्निना रौहिणादारभ्य पञ्च मुहूर्तान् यावत् कर्त्तव्यम् । तथाच मत्स्यपुराणं—

"ऊर्ध्वं मुहूर्तात् कुतपाद्यन्मुहूर्त्तचतुष्टयम् ।
मुहूर्त्तपञ्चकं वापि स्वधाकरणमिष्यते ॥" इति ॥

---

पिण्डान्वाहार्यकमविचारप्रसङ्गेनाऽपराह्णपदार्थे निर्णीते रौहिणानतिक्रमेऽपि वर्णिते फलितमर्थं निष्कृष्य प्रदर्शयति— **ततश्चेति** । साग्निविषयिणीं व्यवस्थामुत्तरत्र प्रतिपादयिष्यन् निरग्निविषयिणीमेव तामत्र प्रदर्शयति— **निरग्निनेति** । "पञ्च मुहूर्तान् यावत्" इत्यत्र प्रमाणमाह— **तथाचेति** । **कुतपादिति** ।

"अह्नो मुहूर्ता विख्याता दश पञ्च च सर्वदा ।
तत्राऽष्टमो मुहूर्तो यः स कालः कुतपः स्मृतः ॥"

इति वक्ष्यमाणलक्षणात् कालादित्यर्थः । अत्र नवमोऽपि मुहूर्तः पार्वणकालत्वेन गौणतयैव निर्दिष्ट इति वक्ष्यतेऽनुपदमेवेति न विरोधः । अमुमेवार्थं मुख्यकालविवेचनपूर्वकमुपपादयितुमुपक्रमते— **इयानिति** । **परिभाषिकापराह्ण एवेति** । न वासरतृतीयांश इति भावः । अपराह्णकालपूर्वतनमुहूर्त इव तदनन्तरमुहूर्तोऽपि गौणकाल एवेत्याह— **पञ्चमेति** । ननु कथं रौहिणपञ्चमयोरनुकल्पत्वं न मुख्यत्वमेवेत्यत आह— **रौहिणस्येति** । **अव्यापकत्वादिति** । अपराह्णाव्यापकत्वादित्यर्थः । तयोश्च पञ्चमोऽतिगौणः निन्दाश्रवणाचेत्याह— **पञ्चमस्येति** ।

इयान् विशेषः— निरग्नेरपि "अपराह्णे पितॄणाम्" इति श्रुत्या यमवचनेन च पूर्वोपन्यस्तेन पारिभाषिकापराह्ण एव मुख्यः कालः, कुतश्चिन्निमित्तात् त्वरया विलम्बेन वा रौहिणतत्पञ्चममुहूर्तयोरनुकल्पता स्यात्; रौहिणस्याव्यापकत्वात्, पञ्चमस्य सायाह्नत्वेन निन्दाश्रवणात्। कुतश्चिन्निमित्तादनुकल्पासंभवे रात्र्यादिपर्युदस्तभागे श्राद्धानुष्ठानमापत्कल्पः। तथा च मनुः—

---

**निन्दाश्रवणादिति।** निन्दाश्रवणाच्चेत्यर्थः। पञ्चमस्याऽप्यव्यापकत्वाविशेषात्॥

रात्रिश्राद्धं तु आपत्कल्प एवेत्याह— **रात्र्यादीति। पर्युदस्तेति।** "रात्रौ श्राद्धं न कुर्वीत" इति वाक्यस्य रत्रिभिन्नकाले श्राद्धं कुर्वीत इति वाक्यार्थमभिसंधायेदमुक्तम्। **राक्षसी कीर्तिता हि सेति।** इदं हि वाक्यं हेतुमन्निगदाधिकरणन्यायेनार्थवाद इति "अपशवो वा अन्ये गो अश्वेभ्यः" इति वाक्येऽन्यनिन्दाया अन्यस्तुतावित्राऽपि रात्रिभिन्नकालस्तुतिरेव क्रियते इति वा, रात्र्यधिकरणकत्वनिषेध एवार्थवादानुसारेण स्वीकर्तव्य इति शङ्का नावावसरति॥

ननु नायं पर्युदासः, किंतु प्रतिषेध एव; नञ्समासो हि नित्य इति नञो रात्रिपदार्थेनान्वये "अरात्रौ श्राद्धं कुर्यात्" इत्येव प्रयोगापत्तेः। एतेन— न शब्दोऽयमव्ययान्तरं इति शङ्काऽपि— परास्ता; तत्राऽपि हि "अङ्गगुणविरोधे च तादर्थ्यात्" इति न्यायेन नञ्शब्दार्थस्य प्रधानाख्यातार्थान्वय एव युक्त इति

"रात्रौ श्राद्धं न कुर्वीत राक्षसी कीर्तिता हि सा ।
सन्ध्ययोरुभयोश्चैव सूर्ये चैवाचिरोदिते ॥ इति ॥"

न च—नायं पर्युदासः, किंतु नञो मुख्यनिषेधविधिरिति-वाच्यम् । कुत्रायं निषेधविधिः ? न तावत् रात्रौ ।

"तीर्थे द्रव्योपपत्तौ च न कालमवधारयेत् ॥

इत्यत्र विकल्पापत्तेः ॥

---

मुख्यप्रतिषेधपरत्वमेव युक्तमिति शङ्कते—नचेति । अयमाशयः—तत्र हि नञः प्रतिषेधपर्यवसायित्वमेव, यत्र प्रतिषिध्यमानस्य रागतः प्राप्तिः, यथा "न कलञ्जं भक्षयेत्" इत्यादौ । एतेन वाक्यभेदापत्तिरेव नञः पर्युदासत्वे प्रयोजिकेति वक्ष्यमाणयुक्तिरपि परास्ता; अन्यथा "न कलञ्जं भक्षयेत्" इत्यत्राऽपि वाक्यभेद-प्रसक्त्यभावात् पर्युदासत्वमेवापद्येतेति श्राद्धे रात्र्यधिकरणकत्वस्य रागादिप्रसक्तस्यैव निषेधान्नञः प्रतिषेधपर्यवसायित्वमेव युक्तमिति ॥ न रात्राविति रात्र्यधिकरणकत्वं यदि निषिध्यते, तर्हि कारकस्यापि शास्त्रतः प्राप्तस्य शास्त्रेण निषेधे विकल्पापत्तिरेव । अत एव—"न प्रथमयज्ञे प्रवृञ्ज्यात्" इत्यत्र न प्रतिषेधः किंतु पर्युदास एवेति भाट्टदीपिकायां व्यक्तम् । तथाच रात्र्यधिकरण-कत्वनिषेधेऽत्राऽपि विकल्पापत्त्या न पर्युदासपरत्वं, किंतु प्रतिषेध-त्वमेव, इत्याशयेन समाधत्ते—कुत्रेति । ननु रात्र्यधिकरणकत्वस्य रागतः प्राप्तत्वात् "न कलञ्जं" इत्यत्रेव न विकल्पः । तदुक्तं भाट्टदीपिकायाम्—"अत एवाक्षेपेण यत्किंचित्कालप्राप्तौ रात्र्यु-

ननु च प्रतीतमुख्यार्थवशेन षोडशिग्रहणाग्रहणवत् सोऽप्यस्तु, न; "यजतिषु ये यजामहं कुर्यान्नानुयाजेषु" इत्यत्र हि वाक्यभेदापत्तेः पर्युदासेन लक्षणा, न तु नञो मुख्यनिषेधार्थत्वानुरोधेन वाक्यभेदः । गङ्गायां घोष इत्यादावप्येकवाक्यत्वप्रतीत्यनुरोधेन लक्षणाया व्युत्पन्नत्वात्, अन्यथा तत्रापि मत्स्यतीर

---

पादानस्यैच्छिकत्वेन रागप्राप्त्या वैधत्वाभावात् न तन्निषेधस्य विकल्पापादकत्वं" इति । तथाचाऽस्य पर्युदासपरत्वमुक्तभाट्टदीपिकादिविरुद्धं इत्यत आह— **तीर्थे इति** । तथा चोक्तवचनेन सामान्यतः प्रवृत्तेन रात्रिकालस्याऽपि प्राप्तत्वान्निषेधे विकल्पोऽपरिहार्य एवेति पर्युदास एवाऽत्र युक्त इति भावः ॥

ननु—"अतिरात्रे षोडशिनं गृह्णाति," "नाऽतिरात्रे षोडशिनं गृह्णाति" इत्यत्र विकल्पापत्तावपि पर्युदासो यथा नाऽङ्गीकृतो नञो मुख्यविधिसम्बन्धस्वारस्येन, तथाऽत्राऽपि विकल्पापत्तावपि प्रतिषेध एवाऽङ्गीक्रियतां इत्याशयेनाशङ्कते— **ननु चेति** । **प्रतीतमुख्यार्थवशेन** प्रतीतमुख्यार्थसंबन्धवशेनेत्यर्थः । नहि पर्युदासपरत्वेऽपि नञो मुख्यार्थहानिरिति भावः । **सोऽपि** विकल्पोऽपि । **अस्तु** भवतु । फलमुखगौरवस्यादूषकत्वादिति भावः । षोडशिवाक्ययोः पर्युदासेनान्वयो न संभवतीत्यगत्या विकल्पोऽङ्गीकृतः, अत्र तु पर्युदाससंभवात् न विकल्पाङ्गीकारो युक्त इत्याशयेन समाधत्ते— **नेति** । ननु अत्राऽपि निषेधपरत्वेऽपि न विकल्पापत्तिः, "न कालमवधारयेत्" इत्यनेन सामान्यतः सर्वेषां

पदाध्याहारेण वाक्यभेदमालम्ब्य मुख्यार्थानुरोधः स्यात् । "दीक्षितो न ददाति" इत्यस्यापि "अहरहर्दद्यात्" इत्येतत्पर्युदासपरता; निषेधपरत्वे दीक्षितपक्षे ऽहरहरित्यनेन निषेधे वैकल्पिको दानविधिरदीक्षितपक्षे नित्य इति विधिवैषम्येन वाक्यभेदापत्तेः । एवंच विकल्पपक्ष उपजीव्यविधेः पक्षतो

---

कालानां विधानेन "न रात्रावि"त्यनेन विशेषतः कालविशेषनिषेधेन च "यदाहवनीये जुहोति," "पदे जुहोति," इत्यनयोरिव विषयविवेकोपपत्तेरित्यत आह— **यजतिष्विति** । सामान्यविशेषन्यायो हि द्वयोरपि विधित्व एव प्रवर्तते, न विधिनिषेधत्वे; अन्यथा— "यजतिषु ये यजामहं करोति" इति सामान्यतः प्राप्तस्य "नाऽनूयाजेषु" इति विशेषवाक्येन निषेधे तत्रापि विकल्पानापत्त्या तत्र पर्युदासाङ्गीकारसिद्धान्तानुपपत्तिः ॥

अयं भावः— निषेधे हि निषेध्यस्य प्रसक्तिरपेक्ष्यते; तत्र सामान्यशास्त्रस्य विशेषातिरिक्तविषयत्वं "प्रकल्प्य चाऽपवादविषयमुत्सर्गोऽभिनिविशते" इति परिभाषानुसारेण यद्यङ्गीक्रियेत, तर्हि निषेध्यप्रसक्तिसंपादनार्थं विध्यन्तरं "न तौ पशौ करोति" इत्यादाविव कल्पनीयं भवतीति वाक्यभेदो विकल्पश्चोभयं समापद्येतेति गौरवातिशयात् पर्युदासाश्रयणमेव "नाऽनुयाजेषु" इत्यत्र यथाऽङ्गीकृतम्, एवमत्राऽपि वाक्यभेदापत्त्या न प्रतिषेधपरता, किंतु पर्युदास एवेति नञो मुख्यार्थसंबन्धलाघवादरणमेतादृशस्थलेषु न युक्तमिति भावः ।

बाधापत्तिः । षोडशिनि तु न ग्रहणपर्युदासत्वम् ; वाक्यान्तरेणैव ग्रहणप्राप्तेः । पर्युदासे च पर्युदसनीयस्याविधेयत्वाद् । अन्यथा निषेध एवापद्येत, किं द्वयविधेरौदासीन्यात् । अतिरात्रपर्युदासे च प्रकरणबाधः स्यादिति गत्यन्तराभावान्निषेधविधिरिति । **एतेन—** विहितवृद्धिश्राद्धेऽचिरोदितसूर्यनिषेध

---

**पर्युदासेन** पर्युदासार्थम् । हेतौ तृतीया । "फलमपीह हेतुः अध्ययनेन वसती"ति वैयाकरणसिद्धान्तादिति न दोषः । **लक्षणा** अमुख्यार्थसंबन्धः ॥

नहि वाक्यभेदपरिहारार्थमसुख्यार्थसंबन्धो निषेधवाक्येष्वेवाद्रियते, किंतु विधिवाक्येष्वपीत्याह— **गङ्गायामिति** । वाक्यभेदापेक्षयाऽमुख्यार्थसंबन्धः पदमात्रस्य लघुरिति भावः । **मत्स्यतीरपदाध्याहारेणेति** । गङ्गायां मत्स्यः तीरे घोषः इति वाक्यार्थसिद्ध्यर्थमिति शेषः । ननु— "यजतिषु ये यजामहं करोति नाऽनूयाजेषु" इत्यत्रैकस्यैवाख्यातस्य श्रवणाच्च वाक्यभेदो युक्त इति युक्तं पर्युदासाश्रयणम्, अत्र तु "न रात्रौ श्राद्धं कुर्वीत," "न कालमवधारयेत्," इत्याख्यातभेदश्रवणात् कथं न वाक्यभेदोऽपि संमत इत्यत आह— **दीक्षित इति** । तथाच "अहरहर्दद्यात्," दीक्षितो न ददाति," इति सामान्यविशेषरूपेण प्रवृत्तयोर्वाक्ययोराख्यातभेदश्रवणेऽपि यथा न वाक्यभेदः, तथाऽत्राऽपि सत्यां गतौ न वाक्यभेद ऊरीकर्तुं योग्य इति भावः । एतावता प्रपञ्चेन विकल्पापत्त्या वाक्यभेदापत्त्या च पर्युदासपरत्वं

इत्यपि— **निरस्तम्;** यतः सर्वेष्वेव वैधैकोद्दिष्टपार्वणनिमित्ततीर्थश्राद्धादिषु रात्र्यादिविशेषविहितेषु "रात्रौ श्राद्धं न कुर्वीते"ति पर्युदासः यद्यपीदं मनुवचनं दर्शश्राद्धप्रकरणपठितम्, तथापि "अदैवं भोजयेत् श्राद्धं पिण्डमेकं च निर्वपेत्। सह पिण्डक्रियायां तु कृतायामस्य धर्मतः॥ अनयैवावृता कार्यं पिण्डनिर्वपणं सुतैः।" इति सपार्वणमेकोद्दिष्टस्य च प्रकृतत्वात्

---

"न रात्रावि"त्यस्य व्यवस्थापितम्, इदानीं विकल्पे का हानिरित्यत आह— **विकल्पपक्ष इति।** तत्र हि न केवलं शास्त्रबाधः, किंतु उपजीव्यशास्त्रबाधोऽपि दोषः। केवलशास्त्रबाधः केवलोपजीव्यबाधस्यायुक्त इति स्थितौ विकल्पपक्षे उभयबाधो भवतीति न तदङ्गीकारः सत्यां गतौ युक्त इति भावः॥

पूर्वं षोडशिवाक्ये न पर्युदासः संभवतीत्यगत्या प्रतिषेधपरत्वं नञोऽङ्गीकृतमित्युक्तम्, इदानीं तत्र पर्युदासासंभवप्रकारमुपपादयति— **षोडशिनीति।** **वाक्यान्तरेणेति।** विशेषरूपेण प्रवृत्तेनेत्यादिः। तथाच "यजतिषु ये यजामहं करोति नाऽनुयाजेषु" इत्यत्र अनुयाजभिन्नेषु यजति इति यथा वाक्यार्थः, एवमत्र षोडशिभिन्नं षोडशिनं ग्रहणभिन्नं ग्रहणं अतिरात्रभिन्नेऽतिरात्रे इति वाक्यार्थो न संभवति; बाधितत्वात्; नहि तद्भिन्नं तदेव भवितुमर्हति। न हि स्वस्य न स्वतादात्म्यम्। तथाच न तत्र पर्युदास इति भावः। पर्युदासेऽपि विकल्पापत्तिं परिहरति— **पर्युदासे चेति।** **अनिषेध्यत्वादिति।** न विकल्प इति

सर्वत्र पर्युदासो युक्तः । नच एकोद्दिष्टपार्वणादेर्नियतमाध्याह्ना-दिकालात्तत्र न रात्र्यादिपर्युदस्तभागमात्रविधिः, किंतु तीर्था-दाविति—वाच्यम् ; विहिततिथौ मध्याह्नाद्यप्राप्तौ श्राद्धलोपा-पत्तेः । तथाच—

मृताहनि तु कर्तव्यं प्रतिमासं तु वत्सरम् ।
प्रतिसंवत्सरं चैवमाद्यमेकादशेऽहनि ॥"

---

शेषः । पर्युदासेऽपि विकल्पे निषेधप्रकारद्वयाङ्गीकरणं व्यर्थमेवा-पद्येतेत्याह— **अन्यथेति** । **द्वयविधेरिति** । नञ्घटितविधि-प्रकारद्वयस्येत्यर्थः ॥

पूर्वमतिरात्रपदार्थस्याऽन्वयानुपपत्त्या पर्युदासपरत्वं षोडशि-वाक्यस्य न संभवतीत्युक्तम्, इदानीं अतिरात्रादिपदसम्बन्धपर्यु-दासेन वाक्यार्थवर्णनमपि न संभवतीत्याह— **अतिरात्रपर्युदासे च प्रकरणबाधः स्यादिति** । **प्रकरणबाधः** वाक्यान्तर-वैयर्थ्यापत्तिरित्यर्थः । न हि "नातिरात्रे षोडशिनं गृह्णाति" इत्यस्य पर्युदासपरत्वे "अतिरात्रे षोडशिनं गृह्णाति" इति वाक्यं कथमपि सफलं भवेत्, यद्यतिरात्रभिन्ने इत्यनेन अतिरात्रे ग्रहणाभावोऽभिप्रेतः । यदि चाऽतिरात्रभिन्नेऽतिरात्रे च सर्वत्र षोडशिग्रहणप्राप्तिरभिमतेति तद्वाक्यसार्थक्यं, तर्हि प्राकरणिक-षोडशिग्रहणविधिपरवाक्यवैयर्थ्यापत्तिरिति न नञोऽतिरात्रपद-संबन्धेन पर्युदासः । एतेन—षोडश्यादिपदसंबन्धेन पर्युदासोऽपि परास्तः। एवं च गत्यन्तराभावात् तत्र प्रतिषेध एवेत्युपसंहरति—

इति याज्ञवल्क्यवचन— "मासि मास्यसिते पक्षे पञ्चदश्यां नरेश्वर । तथाष्टकासु कुर्वीत कामानपि शृणुष्व मे ॥" इति विष्णुपुराणवचनाद्यनेकवचनविरोधः स्यात्; वीप्साबाधापत्तेः। तस्मात् मध्याह्नादि राव्यादिपर्युदस्तभागान्तरस्य च मुख्यकल्पानुकल्पभावेन व्यवस्था । अथवा राव्यादिपर्युदस्तः सर्व एव कालो मुख्यः कल्पः । अपराह्णादिकं तु प्रशस्तमात्रम् । अतएव मनु:—

"यथा चैवापरः पक्षः पूर्वपक्षाद्विशिष्यते ।
तथा श्राद्धस्य पूर्वाह्णादपराह्णो विशिष्यते ॥" इति ॥

---

गत्यन्तरेति । निषेधविधिरिति । नञर्थसंबन्धी विधिरित्यर्थः । नञर्थस्य मुख्यार्थसंबन्ध एवेति यावत् । एतेन—

"सन्ध्ययोरुभयोश्चैव सूर्ये चैवाचिरोदिते ।"

इत्युत्तरार्धोऽपि व्याख्यातः ।

"पूर्वाह्णे मातृकं श्राद्धमपराह्णे तु पार्वणम् ।
एकोद्दिष्टं तु मध्याह्ने प्रातर्वृद्धिनिमित्तकम् ॥"

इति प्रातःकाल एव विहितस्य वृद्धिश्राद्धस्याचिरोदितसूर्यनिषेध एवाङ्गीकरणीयः; न हि तत्र पर्युदासः संभवति; उभयोरपि विशेषरूपेण प्रवृत्तत्वादिति केचन मन्यन्ते, इदं तु न युक्तम्; षोडशिवाक्ये हि यदतिरात्रं यत्र षोडशी यत्र ग्रहणं सर्वमेकरूपम् । अत्र तु "रात्रौ श्राद्धं न कुर्वीत" इत्यत्रत्यश्राद्धपदस्यैव "सन्ध्ययोरुभयोश्चैवं" इत्युत्तरार्धेऽन्वयात् तत्र च वृद्धिश्राद्धस्याननुक्रमात् न वृद्धिश्राद्धस्य नञ्घटितवाक्ये ग्रहणमिति विशेषादित्याह— एतेनेति ॥

मत्स्यपुराणं च—

"अह्नो मुहूर्ता विख्याता दश पञ्च च सर्वदा।
तत्राष्टमो मुहूर्तो यः स कालः कुतपः स्मृतः॥
मध्याह्ने सर्वदा यस्मान्मन्दीभवति भास्करः।
तस्मात्तदत्र फलदस्तत्रारम्भो विशिष्यते॥" इति॥

---

एवं च वृद्धिश्राद्धे अचिरोदितसूर्यकालोऽपि न निषिद्ध इति भावः। ननु—"न रात्रौ" इति वाक्यं दर्शश्राद्धप्रकरणे वर्तते। एवंच कथं तेन सर्वेषामुक्तानां श्राद्धानां ग्रहणमित्याशङ्क्य परिहरति— **यद्यपीति**। ननु – एकोद्दिष्टादीनां मध्याह्नादिकालविशेषनियमनात् रात्रिपर्युदस्तकालमात्रविषयत्वं न संभवति, किंतु यत्र तीर्थश्राद्धादौ कालविशेषो न विहितस्तस्यैव रात्र्यादिपर्युदस्तकालकत्वमिति "न रात्रौ" इति वाक्ये तीर्थश्राद्धस्यैव ग्रहणं नैकोद्दिष्टादीनामपीत्याशयेनाशङ्क्य परिहरति— **न चेति**। विहिततिथौ मध्याह्नाद्यप्राप्तौ श्राद्धलोपापत्त्या प्रतिमासं प्रतिसंवत्सरं च श्राद्धविधिबाधापत्त्या मध्याह्नादेः कालान्तरस्य च मुख्यकल्पानुकल्पभावेन व्यवस्थापनमपेक्षितमिति सर्वेषामेवात्र ग्रहणमिति समाधानयुक्तीराह— **विहितेति**। **व्यवस्थेति** च। अपराह्णादिकालस्य मुख्यत्वं कालान्तरस्य च गौणत्वमुक्तम्, इदानीं रात्र्यादिपर्युदस्तसर्वकालस्याऽपि मुख्यत्वमपराह्णादीनां प्रशस्तत्वमात्रमिति मनुवचननिर्देशपूर्वकमुक्ताशंकां परिहरति— **अथवेति**॥

मुख्ये कल्पेऽसितपक्षे अपराह्णादिसंभवे न कालान्तरे श्राद्धम्, प्राशस्त्यपक्षे तत्संभवेऽपि कालान्तरे श्राद्धे न कश्चिद्विरोधः। अपराह्णादिवैशिष्ट्यवचनं मुख्यकल्पत्वेऽप्यविरुद्धम्। यस्मात् पूर्वाह्णे शुक्लपक्षे च श्राद्धं तत्र प्रशस्तमपराह्णे कृष्णपक्षे च विहितं श्राद्धं तत्र प्रशस्तमिति वचनार्थः। एवंच साग्निना दर्शं विना यत् श्राद्धं क्रियते तत्र निरग्नितुल्यतैव, तत्करणानन्तरं दर्शश्राद्धं तु

---

विशिष्यते प्रशस्तः। न तु स एव काल इति भावः। अत्रैवार्थे मत्स्यपुराणवचनमपि प्रमाणं प्रदर्शयति— **मत्स्येति**। अत्र पक्षद्वयेऽपि व्यवस्थामपेक्षितां निष्कर्षेण प्रतिपादयति— **मुख्ये कल्प इति**। अपराह्णादीनां मुख्यकल्पपक्षे इत्यर्थः। **न कालान्तरे श्राद्धमिति**। मुख्यमिति शेषः। अनुकल्पतया तु भवत्येव। तत्र च मुख्यकालातिक्रमणनिमित्तं प्रायश्चित्तं कर्तव्यमिति भावः। प्राशस्त्यपक्षे न प्रायश्चित्तं कालान्तरेऽपि, तस्याऽपि मुख्यकालत्वादिति निष्कर्ष इति भावः। ननु— अपराह्णादीनां मुख्यत्वपक्षे तस्य विशिष्टत्ववचनानां पूर्वोक्तानां कथमुपपत्तिरित्यत आह— **अपराह्णादीति**। अत्र वचने पूर्वपक्षापेक्षयोत्तरपक्षस्य पूर्वाह्णापेक्षयाऽपराह्णस्य चोत्कर्षो यः प्रतिपादितः स न पूर्वपक्षेऽप्यपराह्णोत्कर्षप्रतिपादनार्थः; शुक्लपक्षे पूर्वाह्णविधिविरोधात्, किंतु पूर्वपक्षे पूर्वाह्णे उत्तरपक्षे उत्तराह्णे च कर्तव्यमिति विध्यर्थवाद एवेति न दोष इति भावः। तदिदमाह— **यस्मादिति**।

रौहिणे न साग्निना कर्तव्यम्। नापि दशममुहूर्तेऽपि, पिण्डपितृयज्ञावरुद्धत्वात्, किंतु तदनन्तरमुहूर्तद्वये पारिभाषिकापराह्णान्तर्गते इति मुख्यः कल्पः। निमित्तादेस्तु पिण्डपितृयज्ञानुरोधादा तदनन्तरमुहूर्तद्वये कर्तव्यम्। एवं चत्वारो मुहूर्ता वासरतृतीयांशस्य श्राद्धकालः, पञ्चमस्त्वतिसन्ध्यासमीपत्वात् त्याज्यः॥

दिनद्वये विहिततृतीयांशेऽमावास्याया अप्राप्तौ श्राद्धलोपप्रसक्तावाह—

---

एतावता प्रपञ्चेन निरग्ने रौहिणाद्यनुकल्पकालत्वं रात्रेरपकल्पकालत्वं च निरूप्य दर्शं विना दर्शश्राद्धकरणे साग्नेस्तदनुकल्पतामिदानीमाह— **एवं चेति**। दर्शानन्तरं साग्नेर्दर्शश्राद्धानुष्ठाने विशेषमाह— **तत्करणानन्तरमिति**। एवंच साग्नेः कुतपानन्तरं मुहूर्तचतुष्टये मुहूर्तद्वयं यदि न स्वीकर्तव्यं पिण्डपितृयज्ञस्य दशममुहूर्तावरोधादिना, तत इदं फलति, यत् वासरतृतीयांशरूपपारिभाषिकापराह्णान्तर्गतमुहूर्तद्वयं तस्य मुख्यः कालः, तदनन्तरमुहूर्तद्वयं तु गौणः कालः, तदनन्तरं पञ्चदशमुहूर्तस्तु "नातिसन्ध्यासमीपतः"॥
इति तस्य कार्यान्तरोपरोधेन निषिद्ध इति—

"पिण्डान्वाहार्यकं श्राद्धं क्षीणे राजनि शस्यते।"

"वासरस्य तृतीयांशे नातिसन्ध्यासमीपतः॥

इति कात्यायनवचनं साग्निविषयं पर्यवस्यतीति सिद्धमिति भावः। अस्मिन् श्लोकेऽमावास्यायामित्यवचनेन "क्षीणे राजनि शस्यते"

**यदा चतुर्दशीयामं तुरीयमनुपूरयेत् ।**
**अमावास्या क्षीयमाणा तदैव श्राद्धमिष्यते ॥**

चतुर्दश्याः प्रहरचतुर्थं यदाऽमावास्या व्याप्नोति, अपरदिने च क्षयीमाणा तृतीयांशव्यापिनी, तदा चतुर्दशीदिन एव श्राद्धमिष्यते । एवं तद्दिने विहिततृतीयांशेऽमावास्याऽप्राप्तावपि तद्दिन एव श्राद्धम्; अपरदिने तृतीयांशाप्राप्तेः । ननु चैवं "यदहस्त्वेव चन्द्रमा न दृश्येतताममावास्यां कुर्वीत" इति

---

इति चन्द्रक्षयोपलक्षितकालपरिग्रहः चतुर्दश्यामपि क्षीणायाममावास्यायां पिण्डान्वाहार्यश्राद्धकर्तव्यतासूचनार्थमित्यभिप्रायमस्फुटं स्फुटयितुं प्रवृत्तं कात्यायनवचनं "यदा चतुर्दशीयामम्" इति, तदिदमवतारयति— **दिनद्वये इति ॥**

एकस्मिन् दिने विहिततृतीयांशेऽमावास्याप्राप्तावुभयत्राऽपि विहिततृतीयांशेऽमावास्याप्राप्तौ च निर्णय उत्तरत्र वक्ष्यत इति भावः । **तुरीयमनुपूरयेदिति ।** चतुर्दशीदिनतृतीयांशेऽमावास्याप्राप्ताविति भावः । चतुर्दशीदिने तृतीयांशे चन्द्रक्षयस्तृतीयांशस्योभयं वर्तते इति परदिने तृतीयांशव्यापितायामपि चन्द्रक्षयाभावात् न तस्मिन् दिनेऽनुष्ठानम् । एतेन— परदिनेऽमावास्याऽप्राप्तावपि पूर्वदिन इति— व्याख्यातमेव । तदिदं सर्वमाह— **चतुर्दश्या इति ॥**

ननु— चन्द्रक्षयस्यैव अमावास्यापदार्थत्वमिति नेदं गोभिलसंमतम् । स हि— "यदहस्त्वेव चन्द्रमा न दृश्यते ताममावास्यां

श्रुतिविरोधः स्यात्; तदहोरात्रशेषे सिनीवालीये चन्द्रदर्शनात्। नच—"दृश्यमानेऽप्येकदा" इति गोभिलसूत्रात् सोऽपि वैकल्पिकः कालः इति— वाच्यम्; अतुल्यबलत्वेन श्रुतिस्मृत्योर्विकल्पासंभवात्। अतएव "यदहस्त्वेवेति" न सूत्रविरोध आशङ्कितः; तद्विरोधस्य "दृश्यमानेऽप्येकदे"ति विकल्पपरिहृतत्वात् इत्यतस्तं विरोधं परिहरति—

कुर्वीत" इति सूत्रेण चन्द्रादर्शनस्यैवामावास्यापदार्थत्वं मन्यते। एतेन—"यदहस्त्वेव चन्द्रमा न दृश्यते" इति श्रुतिरपि-व्याख्यातेति चेत्,—

अत्र तर्कालङ्कारमहाशया गोभिलभाष्ये—"चन्द्रक्षयोऽप्यमावास्या, चन्द्रादर्शनमप्यमावास्या; "चन्द्रे क्षीणे दद्यात्" यदहस्त्वेव" इति श्रुतिद्वयात्, आद्या क्षीयमाणा, द्वितीया वर्धमाना, उक्तद्वितयाभिप्रायेणैव "यदहस्त्वेव चन्द्रमा न दृश्यते ताममावास्याम्," "यदहस्त्वेव चन्द्रमा न दृश्यते ताममावास्यां कुर्वीत," इति सूत्रद्वयम्। अत्र च श्रुतिद्वयस्य नैकवाक्यता। न हि श्रुतौ "न दृश्यते" इत्यस्य क्षयलक्षणा युक्ता; अन्यथा सूत्रद्वयवैयर्थ्यात्। तथाचामावास्यायाश्चन्द्रक्षयपदेन व्यवहारो नाऽनुपपन्नः इति— वदन्ति॥

अत्र चामावास्या त्रिविधा संभवति परदिने पूर्वदिवसीयचतुर्दश्यपेक्षया न्यूनकालव्यापिनी समकालव्यापिनी अधिककालव्यापिनी च। आद्या क्षीणा, द्वितीया स्तंभिता, तृतीया वर्ध-

यदुक्तं यदहस्त्वेव दर्शनं नैति चन्द्रमाः ।
तत्क्षयापेक्षया ज्ञेयं क्षीणे राजनि चेत्यपि ॥

यत् श्रुतावदर्शनं तत्क्षयाभिप्रायम्, यस्मिन्नहनि क्षयो भवतीति तस्यार्थः । अस्माभिरपि यत् "क्षीणे शस्यत" इत्युक्तं तदपि नादर्शनाभिप्रायेण, येन लोकविरोधः स्यात्, किंतु क्षयाभिप्रायेण। क्षयश्चतुर्दश्यष्टमयाम इति वक्ष्यति । अतस्तद्दिने चन्द्रक्षये श्राद्धकरणात् सूत्रविरोधः स्यादित्याशंक्याह–

---

मानेत्यपि त एव निरूपयन्ति । अत्र यदि द्विविधाऽमावास्या सूत्रद्वयेन सूचिता, तर्हि कथं तृतीयप्रकारोऽपि न सूचितः ? तथाच सूत्रद्वयेऽपि क्षय एव विवक्षितः । किमर्थं सूत्रद्वयमिति चेत्, उपवासयोग्याऽमावास्या चन्द्रक्षयविशिष्टैव न पौर्णमास्यामिव तत्र खण्डाखण्डयोर्विकल्प इति निरूपणार्थमेव । तथाच "चन्द्रे क्षीणे ददाति" इति शतपथब्राह्मणवाक्यस्य "यदहस्त्वेव चन्द्रमा न दृश्यते" इति श्रुत्यन्तरवाक्यस्य चैकवाक्यतायामपि न दोषः । एकवाक्यतायां च सिद्धायामदर्शनस्य क्षय एव पार्ष्ठिकबोधविधया पर्यवसानं भविष्यतीति नाऽत्र तत्कालिङ्कारापादितलक्षणाप्रसङ्गो वर्तते । एवं च श्रुतिसूत्रयोरप्येकवाक्यता सिद्धा भवति । सूत्रद्वये किं सूत्रं "क्षीणे चन्द्रे" इति श्रुत्यर्थनिर्णायकम् ? किं च "यदहस्त्वेव" इति श्रुत्यर्थनिर्णायकमिति निर्णये किं वा कारणमिति न जानीमः । सूत्रद्वयमपि "न दृश्यते" इति पदनिर्देशेनैव यतः प्रवृत्तं ततो ह्यवगम्यते क्षयादर्शनश्रुत्योरेकवाक्यतेति ।

**यथोक्तं दृश्यमानेऽपि तच्चतुर्दश्यपेक्षया।**

चन्द्रदर्शने यच्छ्राद्धं गोभिलेनोक्तं तच्चतुर्दशीदिनाभिप्रायम्। तद्दिने चन्द्रमा दृश्यमान इति दर्शनार्थमेव, न तु क्षयाभावार्थम्, अतो न विरोधः॥ तद्दिने श्राद्धं किममावास्याकाले, चतुर्दश्यन्तिमयामकाले वा उभयतश्चन्द्रक्षयलाभादिति सन्देह आह—

अन्यथा स्पष्टं सूत्रकारैः कथं एकस्मिन् क्षयशब्द एव न प्रयुक्त इति भवन्त एव विवेचयन्तु। तथाचैकवाक्यतया व्याख्यानमेवाऽत्र युक्तमिति वाचस्पतिमिश्रादिमतम्॥

अत्र मतद्वये द्वितीयमेव मतं परिशिष्टप्रकाशकाराणामपि मतम्, यतः परिशिष्टप्रकाशकाराः स्वमतानुगुणमेव "यदहस्त्वेव" इति श्रुतिसूत्रे योजयिष्यन्तः कथं श्रुतिविरुद्धं "क्षीणे राजनि शस्यते" इत्युक्तमित्याशयेनाशङ्क्योक्ताशङ्कां क्षयपरत्वमेवोक्तश्रुतेरपीति प्रतिपादनेन निरस्यन्ति— **नन्वित्यादिना**॥

**श्रुतावदर्शनमिति**। न तु सूत्रस्थादर्शनपदमात्रमित्यर्थः। एवं च क्षयादर्शनवाक्ययोरेकवाक्यतैव युक्तेति सूचितम्। ननु— "चन्द्रक्षय एव यदि श्राद्धकालस्तर्हि "दृश्यमानेऽप्येकदा" इति सूत्रेण कथं तदक्षयेऽपि श्राद्धवर्णनमुपपद्यते? इत्यत आह— **यथोक्तमिति**। अत्र दृश्यमानशब्देन क्षयाभावो न विवक्षित इत्याह— **चतुर्दशीदिन इति**। ननु चतुर्दश्यामपि श्राद्धं यदि करणीयम्, तर्हि तस्मिन् दिने किममावास्याकाल एव कर्तव्यम्, उत विनैव तत्प्रतीक्षां श्राद्धं कर्तुं युज्यते? अयं भावः—यदि

**अमावास्यां प्रतीक्षेत तदन्ते वापि निर्वपेत् ॥**

यद्यमावास्या श्राद्धयोग्यतृतीयांशे तुरीयप्रहरे प्राप्नोति, तदा श्राद्धार्थं तां प्रतीक्षेत, अथ तुरीयप्रहरे सन्ध्यासमीपमुहूर्ते-ऽमावास्या, तदा चतुर्दश्यन्त्यथाम एव श्राद्धं कुर्यात् । न च "अमावास्यायां पितृभ्यो दद्यात्" इति श्रुतिर्बाध्येत; चन्द्र-

---

चन्द्रक्षय एवाऽमावास्या, तर्हि विनाऽपि प्रतीक्षां चतुर्दश्यन्तिमयामे श्राद्धं कर्तुं युज्यते, यदि च प्रतीक्षा कर्तव्या, तर्हि चन्द्रक्षय एवा-मावास्येति न युक्तमिति "चन्द्रक्षयपरत्वादमावास्यापदस्ये"त्युत्तर-ग्रन्थविरोधापत्तिरित्याशयशङ्कानिरासार्थं "अमावास्यां प्रतीक्षेत" इति श्लोकांशस्य प्रवृत्तिरित्याह— **तद्दिने इति** ॥ यद्यपि चन्द्र-क्षय एवामावास्यापदवाच्यः; तथापि चतुर्दश्यष्टमयामक्षयापेक्षया-ऽमावास्याप्रथमयामक्षयस्य मुख्यत्वात् तत्प्रतीक्षणं युक्तमिति भावः ॥

"अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्ति" इत्यत्रा-ऽप्यमावास्यापदेन चन्द्रक्षय एव विवक्षित इति पिण्डपितृयज्ञोऽपि चतुर्दशीदिन एव कर्तव्यः । एवं च पिण्डान्वाहार्यकं इति समाख्या "अमावास्यायां द्वितीयं श्राद्धमन्वाहार्यकं" इत्यादिवचनानि चोपपन्नानि भवन्ति ॥

**अपराह्णेति** । तृतीयांशे इति पूर्वमिवाऽत्रानिर्देशादवगम्यते पौराणिकापराह्ण एवाऽत्र विवक्षित इति । यथाच पौराणिका-पराह्णविवक्षणमेव प्रामाणिकं न तृतीयांशापराह्णत्वं तथा पूर्वमेव निरूपितम् । "अमावास्यायां पिण्डपितृयज्ञेन" इत्यत्राऽप्यमा-

क्षयपरत्वादमावास्यापदस्य । अत एव पिण्डपितृयज्ञोऽपि तद्दिन एव; चतुर्दशीकालेऽपराह्नचन्द्रक्षययोर्लाभात् । अत एव मनुः— "पितृयज्ञं तु निर्वृत्य विप्रश्चन्द्रक्षयेऽग्निमान्" इति । चन्द्रक्षय-कालमाह—

"अष्टमेंऽशे चतुर्दश्याः क्षीणो भवति चन्द्रमाः ।
अमावास्याष्टमांशे च पुनः किल भवेदणुः ॥"

---

वास्यापदेन चन्द्रक्षय एव विवक्षित इत्यत्र प्रमाणमाह— **अतएव मनुरिति । चन्द्रक्षये इति ।** इदममावास्यापदविवरणमिति भावः । ननु— चन्द्रक्षयकालः कः ? इत्यत आह— **चन्द्रक्ष-येति ।**

ननु— चन्द्रक्षयः एकोनकलत्वेन द्वितीयोनकलत्वेन तृतीयो-नकलत्वेन तुरीयोनकलत्वेन सर्वक्षयेण च पञ्चविधो भवति । तत्र सर्वेषामपि चन्द्रक्षयपदार्थत्वात् तिथ्यन्तरेऽपि चतुर्दश्यामिव श्राद्धानुष्ठानप्रसङ्ग इति— चेत्,

अत्रेदं विवक्षितम् । तुरीयोनकलत्वं सर्वक्षयस्यामावास्यापदार्थः । अतस्तुरीयोनकलत्वं यावच्छ्राद्धकालः । तच्च तुरीयोनकलत्वं चतु-र्दश्यष्टमयामेऽमावास्यानवमयामे च वर्तते इति चतुर्दश्यष्टमया-ममारभ्य अमावास्यानवमयामपर्यन्तं श्राद्धकालः । तत्र यथा "रौहिणं तु नाऽतिक्रमेत्" इति वाक्ये रौहिणपञ्चममुहूर्तयोर-नुकल्पत्वमेवमत्राऽपि तुरीयोनकलत्वस्यानुकल्पत्वं सर्वक्षयस्य मुख्यत्व-मिति विवेक इत्यमावास्याप्रतीक्षादिवचनमपि सार्थकं भवति ।

चतुर्दशीशेषप्रहरादारभ्यामावास्याष्टमयामं यावत् क्षयकाल इत्यर्थः। **ननु** क्षयो विनाशः सूक्ष्मता वा। **नाद्यः;** सिनीवाल्यां तदभावात्, **नाऽपि द्वितीयः;** केवलायाममावास्यायां तदभावे क्षयाभावात् श्राद्धलोपापत्तेः।

**उच्यते,** तुरीयोनकलावशिष्टता सर्वविनाशश्च इयं क्षयपदवाच्यम्। द्विविधो हि क्षयः—कृत्स्नक्षयोऽकृत्स्नक्षयश्च। **अकृत्स्नक्षय**स्तुरीयोनकलावशिष्टता, सा चतुर्दशीशेषयामे भवति। **कृत्स्नक्षयः**-सप्तमेऽमावास्यायामे, अष्टमे च पुनस्तुरीयोनकलावशिष्टता, एवं

---

तथाच न तिथ्यन्तरे श्राद्धानुष्ठानापत्तिरिति। अमुमेवाऽर्थं कात्यायनवचननिर्देशपूर्वकमुपपादयति— **अष्टमेंऽशे चतुर्दश्या इति॥**

तुरीयोनकलत्वं हि क्षयमुखेन यदा भवति तदा क्षयपदेन, सर्वक्षयानन्तरवृद्धिमुखेन यदा भवति तदाऽणुपदेन व्यपदिश्यत इति युक्त एव चतुर्दश्यष्टमे यामे क्षयपदेनामावास्यानवमयामेऽणुपदेन च व्यवहारः। चतुर्दश्यष्टमयामे यादृशमवस्थानं तादृशमेवामावास्याष्टमयामानन्तरमित्यत्र हि पुनश्शब्दस्वारस्यं गमकमिति नारायणोपाध्याया मन्यन्ते॥

तर्कालङ्कारमहाशयास्तु गोभिलभाष्ये—"अष्टमेंऽशे चतुर्दश्याः" इति श्लोकमन्यथा व्याचक्षते। तेषामयमाशयः—अत्र हि—"पुनः किल भवेदणुः" इति न पाठः प्रामाणिकः; "ततः किल भवेदणुः" इति ततश्शब्दघटितपाठस्यैव सर्वेष्वपि ग्रन्थेषु दर्शनात्, शूलपाणिप्रभृतिभिः प्रामाणिकतरैश्च तथैव पठितत्वाच्च। किं

नवमयामः चयकालः । अन्यथा "पुनः किल भवेद्गुणः" "चतुर्थभागोनकलावशिष्ट" इत्यभिधानं निरर्थकं स्यात्; पुनश्शब्दप्रयोगात् ,यादृशमणुत्वं चतुर्दशीशेषयामे तादृशमित्याह ॥

पौर्णमास्यन्तायहायणज्येष्ठसंबन्धिन्योऽमावास्यायाश्चन्द्रगतिवैलक्षण्यान्न चतुर्दश्यष्टमयामे चयः इत्याह—

आग्रहायण्यमावास्या तथा ज्येष्ठस्य या भवेत् ।
विशेषमाभ्यां ब्रुवते चन्द्रचारविदो जनाः ॥
अत्रेन्दुराद्यप्रहरेऽवतिष्ठते ।
चतुर्थभागोनकलावशिष्टः ।
तदन्त एव क्षयमेति कृत्स्न-
मेवं ज्योतिश्चक्रविदो वदन्ति ।

---

बहुना— नारायणोपाध्यायमतमनुजानन्नपि वाचस्पतिमिश्रः तत इत्येवाऽच पठति । नाऽपि वा पुनः इति पाठ आञ्जस्येनोपपद्यते । यदि हि चतुर्दश्यन्तिमयामे यादृशः चयस्तादृश एव चयोऽमावास्याऽष्टमांशेऽपि विवक्षितस्तर्हि चयपदं विहायाणुपदेन तस्य निर्देशो नोपपन्नः; लक्षणाप्रसक्तात् । अस्तु वा कथमपि लक्षणाऽपि— एवमपि—

"अत्रेन्दुराद्यप्रहरेऽवतिष्ठते
चतुर्थभागोनकलावशिष्टः ।
तदन्त एव चयमेति कृत्स्न-
मेवं ज्योतिश्चक्रविदो वदन्ति ॥"

इति वचनात्, किंतु अमावास्याप्रथमयामे। तदन्ते अमावास्यान्तयामे। एवं भाद्रप्रतिपत्प्रथमयामेऽनुरूपत्वात् सोऽपि चयकालः।

इति विशेषाभिधानस्वरसादमावास्यासप्तमयाम एव सर्वचयस्यावगमो न त्वमावास्याप्रथमयामे। किंच "पुनः किल भवेदणुः" इत्यणुपदप्रयोगो हि पुनरवयवापचय एव संभवादमावास्याष्टमयामे च तदपचयाभावात् न स्वरसो भवति। अन्यच्चाणुमात्रावस्थानम्, अन्यच्च चतुर्थोनकलत्वम्। तथाच—"पुनः किल भवेदणुः" इति वाक्यस्यामावास्याऽष्टमांशेऽणुरुत्पद्यते इति वाक्यार्थवर्णनमुखेन चयाभावपरत्वमेवाङ्गीकरणीयम्। "अणुर्भवति," "अणुरुत्पद्यते," इति तत्त्वकारादिव्याख्यानमप्यत एवोपपद्यते इति॥

तत्र पुनश्शब्दघटितस्य पाठस्याऽप्रामाणिकत्वं तु यदि नारायणोपाध्यायैः स स्वकपोलकल्पितस्तर्ह्युपपद्यते। न वयमिमं पाठं स्वकपोलकल्पितं पश्यामः। एश्याटिक् सोसयिटीसंपादिताऽऽदर्शत्रयेऽपि पुनश्शब्दघटित एव पाठो दृश्यते, इत्युक्तसोसयिटी द्वारा स्वभाष्यादि प्रकाशयतां तर्कालंकाराणां कुत्रापि पुनश्शब्दघटितः पाठो न दृश्यते इत्युक्तौ किंवा कारणमिति न विद्मः। न हि ततश्शब्दघटितेन पाठेन तेषां कोऽपि स्वसिद्धान्तस्थापने क्लेशो वर्तते। न हि विना प्रयोजनं कोऽपि किमप्यन्यथा कल्पयितुमिच्छेत्। न हि ततश्शब्दस्य पुनश्शब्दस्य च कोऽप्यर्थभेदो वर्तते। पुनश्शब्द आनन्तर्यप्रतियोगी न निर्दिष्टः, ततश्शब्दे तु

यस्मिन्नब्दे द्वादशैकस्य यस्या-
स्तस्मिन् तृतीया परिदृश्या न जायते ।
एवं चारं चन्द्रमसो विदित्वा
क्षीणे तस्मिन्नपराह्णे च दद्यात् ॥

---

शोऽपि निर्दिष्ट इत्येव विशेषः । एवं चोक्तपाठाप्रामाणिकत्वं न वयमनुमन्यामहे । पुनश्शब्दघटितपाठे यादृशमस्वारस्यं तत्सर्वं तत्तश्शब्दघटितेऽपि वर्तते । अवश्यं चेदं तर्कालङ्कारैरप्यङ्गीकरणीयम्— यदकृत्स्नचयः कृत्स्नचयस्य द्विविधः चयः इति "अर्धेन्दुराद्यप्रहरेऽवतिष्ठते" इति वचनं प्रमाणयद्भिः ॥

अथेदमेव विचारणीयम्— चतुर्दश्यष्टमयामे कृत्स्नचयो वाऽकृत्स्नचयो वाऽत्र विवक्षित इति । अत्र प्रकरणे— "अर्धेन्दुराद्य प्रहरेऽवतिष्ठते" इति वचनोपन्यासेन तर्कालङ्काराणां चतुर्दश्यन्तिमयामे कृत्स्नचयो विवक्षित इति मतमिति स्पष्टं ज्ञायते । अत्र च पक्षे "अमावास्याऽष्टमांशे चे"ति च शब्दस्त्वर्थ इति तैरेव योज्यत इत्येकमस्वारस्यम् । "अर्धेन्दुरिति" श्लोकस्य तैरेव—

"आग्रहायण्यमावास्या तथा ज्यैष्ठस्य या भवेत् ।
विशेषमाभ्यां ब्रुवते चन्द्रचारविदो जनाः ॥

"अर्धेन्दुराद्ये प्रहरेऽवतिष्ठते" इति प्रकरणान्तरस्थत्ववर्णनात् तस्य चतुर्दश्यष्टमयामचयपरत्वाभावस्य तैरपि वर्णनीयत्वात् न तदनुसारेण चतुर्दश्यष्टमयामे कृत्स्नचयपरत्वव्याख्यानं शोभत इति द्वितीयमस्वारस्यम् । यथाहि अवयवोपचयावस्थायामणुशब्दप्रयो-

पूर्वार्धं व्याख्यायते— **यथाः** मासाः, **द्वादशैकस्य** चयोदश, यस्मिन् अब्दे चयोदश मासास्तस्मिन् अब्दे हतीया मात्रा न दृश्यते तुरीयोनकलावशिष्टो न भवतीत्यर्थः । अत्र कृत्स्नचयो नास्तीति यावत् । "हतीययामपरिदृश्यो न जायते" इति

---

गानुपपत्तिः परेषां एवं भवतामपि अणुरुत्पद्यते इति वदतां सा समस्त्येव । अत्र भवतिशब्दस्योत्पद्यते इत्यर्थवर्णने लक्षणादोषस्तु भवतामधिक एव । "यदहस्त्वेव चन्द्रमा न दृश्यते" इति सूत्रेऽपि अहनि चन्द्रक्षयविशेषणं नाऽमावास्यायामिति चतुर्दशी-दिनमपि चन्द्रक्षयविशिष्टममावास्येत्यर्थ एव गम्यते इति क्षया-भावोऽयमावास्याया वर्तते इति नाऽयमभिप्रायः प्रामाणिक-संमतः । एवं च चशब्दस्वारस्यात् चतुर्दश्यष्टमांशेऽमावास्याष्टमांशे च क्षयः पुनस्ततो वाऽणुश्चतुर्थकलोन इति नारायणोपाध्याय विवरणमेव युक्तम् । यथाचाऽणुपदप्रयोगो व्युत्क्रमेण चतुर्थकलाव-शेषत्वेऽपि भवति, तथा पूर्वमुपपादितम् । एवं चात्र परिशिष्ट-प्रकाशे न काप्यनुपपत्तिः । नहि तेषां पुनश्शब्दपाठ आग्रहः, किंतु स एव स्वरस इत्येव । विना हि क्लेशं तत्र शास्त्रार्थ-व्यवस्थापनं भवतीत्यलमतिविस्तरेण ॥

आग्रहायणज्येष्ठामावास्ययोश्चन्द्रक्षये विशेषो वर्तते । तत्र हि अमावास्याप्रथमयामेऽकृत्स्नक्षयः, तदन्तिमयामे कृत्स्नक्षयः, प्रति-पत्प्रथमयामे च पुनरकृत्स्नक्षय इति तत्र चतुर्दश्यन्तिमयामक्षया-भावात् सन्ध्यासमीपमुहूर्तेऽमावास्याप्राप्तौ चन्द्रक्षय-विहितवाभर-

पाठान्तरम् । यदाऽमावास्या चीयमाणा श्राद्धयोग्यमुहूर्ते, तदाऽमावास्याक्षणे चन्द्रक्षयापराह्णयोर्लाभात् श्राद्धं दद्यात् । यदा तु सन्ध्यासमीपमुहूर्तमात्रेऽमावास्या, परदिने च वासरतृतीयांशं न व्याप्नोति, तदा परदिन एव वासरतृतीयांशे प्रतिपत्प्रथमयामे

तृतीयांशयोरभावात् परदिन एव वासरतृतीयांशाव्याप्तित्वेऽप्यनुष्ठानं प्रतिपत्प्रथमयामे चन्द्रक्षयसत्त्वादिति, तमिमं विशेषमाह—**आग्रहायणीति।** **आभ्यां विशेषं** अनयोरमावास्यान्तरेण विशेषमित्यर्थः। **क्षयेन्दुरिति**। अयं श्लोको यत्तर्कालङ्कारैः—"अष्टमांशे चतुर्दश्याः" इति श्लोकव्याख्यावसरेऽपि गृहीतः, तच्च सङ्गतमिति पूर्वमेव निरूपितम् ॥

अत्र च श्लोके विशेषवर्णनप्रतिज्ञानेनाक्षत्क्षयः क्षत्क्षयस्यावधिद्वयेन प्रतिपादित इत्येतद्रीतिसाम्यमष्टमेऽंशे चतुर्दश्या इति श्लोकस्याऽपि तदेव भवेत्, यदि तत्र चतुर्दश्यष्टमयामोऽक्षत्क्षयकालोऽमावास्याष्टमयामश्च क्षत्क्षयकाल इति विवक्षितं भवेदिति, तर्कालङ्कारविवरणे रीतिसाम्यभङ्गोऽधिकोऽपरो दोषोऽनुसन्धेयः ॥

**इतराऽमावास्यायामिवेति** ॥ आग्रहायण्यैष्ठ्येतरामावास्यायामिवेत्यर्थः। तर्कालङ्कारास्तु—यत्र तु पूर्वदिने सन्ध्यासमीपमुहूर्तमात्रेऽमावास्या, तत्राऽपि मार्गशीर्षज्यैष्ठ्ययोरितरत्र पूर्वदिन इव चतुर्दश्यां कर्तव्यं, न परत्राऽमावास्यायामपि; चीयायां पूर्वत्रैवोपदेशात्, चतुर्दश्यामपि श्राद्धविधानाच्च। "तदन्ते वाऽपि निर्वपेत्" इत्यमावास्याभावेऽपि चतुर्दश्यन्ते निर्वापो हि कात्या-

चन्द्रक्षयापराह्णयोर्लाभाद्यथात् ; न त्वितरामावास्यायामिव पूर्वदिने, चतुर्दश्यन्त्ययामे चन्द्रक्षयाभावात्, इतरास्वमावास्यासु हि चतुर्दश्यादिसन्ध्यासमीपमुहूर्तमात्रव्यापिनीषु परदिने तृतीयांशव्यापिनीषु पूर्वदिन एव चतुर्दश्यन्त्ययामे चन्द्रक्षयवासरतृतीयांशलाभेनापरप्रतिपत्काले चन्द्रक्षयाभावात् पूर्वदिन एव श्राद्धं नोत्तरत्रेति ॥

---

यत्नोपदिष्टो नाऽस्माभिः परिहर्तुं शक्यः । "यदा विप्रकृष्टत्वादमावास्यायाः प्रतीक्षणे सन्ध्यासामीप्यं स्यात्, तदाऽमावास्यां न प्रतीक्षेत" इति वर्णयद्भिः भट्टनारायणोपाध्यायैरयमेवाऽर्थो भङ्ग्यन्तरेण प्रतिपादित इति गोभिलभाष्ये— वदन्ति । तत्र भट्टनारायणोपाध्यायानामपि अयमेवाऽर्थो विवक्षित इति यदुक्तं तत् न तदाशयप्रकाशनपरम्, किंतु स्वकल्पनाचातुर्यप्रदर्शनमेव । न हि चन्द्रक्षयमात्रं श्राद्धकालः, किंतु सन्ध्यादिपर्युदस्तकालसमवहितः, सन्ध्यासमीपमात्रेऽमावास्याप्राप्तावपीतरामावास्यासु "चतुर्दश्यष्टमे यामे" इति वचनसिद्धचन्द्रक्षयसंभवात् । सन्ध्यसमीपेऽमावास्याप्राप्तौ पूर्वमपि चन्द्रक्षयवासरतृतीयांशयोर्यथालाभेन श्राद्धानुष्ठानं न तथा आग्रहायण्यैष्ठ्यचतुर्दशीदिने सन्ध्यासमीपमात्रेऽमावास्याप्राप्तौ विहितवासरतृतीयांशे चन्द्रक्षयरहिते श्राद्धानुष्ठानं साधीयो भवति ।

"यदा चतुर्दशीयामं तुरीयमनुपूरयेत् ।
अमावास्या क्षीयमाणा तदैव श्राद्धमिष्यते ॥"

इति वचनं हि चन्द्रक्षयविशिष्टविहितवासरतृतीयांशवच्चतुर्दशी-

**सम्मिश्रा या चतुर्दश्या अमावास्या भवेत् क्वचित् ।**
**खर्विता तां विदुः केचिद्गतेऽध्व[1]मिति चापरे ॥**

या चतुर्दशीयुक्ताऽमावास्या तां केचित् **खर्वितां** नीचां निन्दितामाचक्षते, तत्कर्मानर्हत्वात् । अपरे च तामेवोपेक्ष्य-मनुष्ठानात्तामुपगच्छतेति मन्यन्ते । कस्मिन् तर्ह्ययं विकल्प इत्याह—

---

विषयमिति पूर्वोत्तरसन्दर्भेण स्पष्टमवगम्यते । तथाचाऽऽपस्तम्बाद्यक्तां विहितवासरद्वतीयांशेऽमावास्याप्राप्तौ पूर्वदिनेऽनुष्ठानेऽपि रात्राव-मावास्याप्राप्ताविव सन्ध्यासमीपमात्रेऽमावास्याप्राप्तावपि परदिन एव चन्द्रक्षयविशिष्टेऽनुष्ठानं युक्तम् । उक्तं हि तर्कालंकारैरेव— "मार्गशीर्षज्यैष्ठयोश्चतुर्दश्यष्टमयामे न श्राद्धम्, तत्र चन्द्रक्षया-भावात्, किंत्वमावास्यायामेव, पूर्वदिने त्वमावास्याया अलाभे परदिनेऽपि श्राद्धम्, तत्र चन्द्रक्षयलाभात्" इति । तथाच रात्रावमावास्याप्राप्तौ कथं "पूर्वदिन एव न श्राद्धमि"ति तैरुक्त-मिति विवेचनीयम् । यदि निषिद्धत्वात् तत्रत्यश्चन्द्रक्षयो नोपयुक्तः, तर्ह्यत्राऽपि "नातिसन्ध्यासमीपतः" इति सन्ध्या-समीपकालस्य निषिद्धत्वात् समानं परदिन एव तदनुष्ठानं युक्त-मिति । "चतुर्दशीयाममनुपूरयेत्" इति वाक्येऽनुप्रवृत्तप्रयो-गेण यद्यपि तर्कालङ्कारोक्तरीत्या न सर्वावच्छेदेन चतुर्दशीया-मस्यामावास्यासंबन्धोऽभिप्रेतः; तथाऽपि विहितद्वतीयांशैकदेश-संबन्धस्त्वपेक्षित एव । चतुर्दशीशेषयाममित्यनुक्त्वा तुरीयपद-

---

(१) उपेध्वमित्यत्रात्मनेपदमार्षत्वात् । गताध्वामिति पाठान्तरम् ॥

**वर्धमानाममावास्यां लक्षयेदपरेऽहनि ।**
**यामांस्त्रीनधिकान्वाऽपि पितृयज्ञस्ततो भवेत् ॥**

चतुर्थोक्तक्षीयमाणापेक्षया वर्धमानां वासरत्रितीयांशव्यापिनीं । चन्द्रक्षयापराह्णलाभाभावेऽपि तस्यामेव श्राद्धं भवेत् । एवं संभिन्नायां विकल्पः । तथाच लघुहारीतः—

---

प्रयोगेण हि न शेषयामेषु पञ्चमादिषु श्राद्धानुष्ठानप्रसक्तिर्निषिद्धत्वादिति निषिद्धत्वाविशेषात् सन्ध्यासमीपातिरिक्तभागस्यैव तुरीययामपदेन ग्रहणमिति, तर्कालङ्कारसिद्धान्तोऽच न कात्यायनसंमत इत्यलमतिविस्तरेण ॥

एतावता प्रपञ्चेन क्षीणाऽमावास्यायां कदा श्राद्धं कर्तव्यमिति विषयं निर्धार्य संमिश्रामावास्यायां कदा श्राद्धं कर्तव्यमिति संशयनिरासार्थं प्रवृत्तं संमिश्रेतिश्लोकं व्याख्यातुं तं निर्दिशति **संमिश्रेति** ॥

पूर्वदिने यावती चतुर्दशी तावती परदिनेऽमावास्या यदि वर्तेत, साऽपि संमिश्राऽमावास्या, पूर्वदिने यावती चतुर्दशी ततोऽधिकाऽमावास्या यदि परदिने, साऽप्यमावास्या संमिश्राऽमावास्या । तत्र चतुर्दशी निन्दितेति केचिन्मन्यन्ते । केचित्तामनुष्ठानयोग्यां मन्यन्त इति वाक्यार्थं इत्याह— **या चतुर्दशीति** । अत्र च वर्धमानाया न विवक्षा, उत्तरत्र तस्याः प्रक्रमात्, किंतु संभिन्नया एवेति "संभिन्नायां विकल्पः" इति सिद्धान्तः । कुत्र तर्हि न विकल्प इति शङ्कया "वर्धमानां" इति श्लोकमवतारयति—

"त्रिमुहूर्तापि कर्तव्या पूर्वा दर्शा च बह्वृचैः।
कुहूरध्वर्युभिः कार्या यथेष्टं सामगीतिभिः॥ इति॥
अध्वर्युभिः यजुर्वेदिभिः, सामवेदिनां यथेष्टाचरणम्॥

**पक्षादावेव कुर्वीत सदा पक्षादिकं चरुम्।**
**पूर्वाह्ण एव कुर्वीत विद्वेऽप्यन्ये मनीषिणः॥**

अत्रान्ये इत्यकरणपक्षोऽपि सूचितः॥

इति श्राद्धकालनिर्णयः॥

---

**कस्मिन्निति।** **पितृयज्ञस्ततो भवदिति।** परदिन एव पितृयज्ञादिकमित्यर्थः। वर्धमानायां चन्द्रक्षयाभावेऽपि न चतिरित्याह— **चन्द्रेति॥**

"स्त्रक्षितायां विकल्पः" इत्यत्र हारीतवचनमपि प्रमाणयति— **तथाचेति।** "यथेष्टं सामगीतिभिः" इति प्रकृताभिप्रायम्। न शाखाभेदेनैव वेदभेदेनाऽपि व्यवस्थितविकल्प इत्यन्येषामपि विकल्प एव। "बह्वल्पं वा स्वगृह्योक्तं" इति त्वर्थवादः, अतएवाऽऽचाराधिकरणे गौतमादिस्मृतीनां सर्वाध्येयत्वादिसिद्धान्त उपपद्यते। न हि देशभेदेन पुरुषभेदेन वा धर्माऽधर्मौ व्यवस्थितौ।

"वेदानधीत्य वेदौ वा वेदं वाऽपि यथाक्रमम्।" इति सर्ववेदाध्ययनं सर्वेषां नियतम्। स्ववेदगतशाखाविशेषाध्ययनं तु यद्यपि निषिद्धम्; तथाऽपि वेदान्तराध्ययनं न निषिद्धमिति सर्वेषामपि विकल्प एवेति भावः॥

**इति श्राद्धकालनिर्णयः॥**

# अथ वृद्धिश्राद्धप्रकरणम् ॥

अथेदानीं जीवत्पितृकाधिकारिकेषु श्राद्धेषूच्यते। स्मार्तस्याप्यस्य श्राद्धस्य वैदिकवत्कर्तव्यत्वमेव। तदुक्तम्—

"श्रुतिस्मृतिविरोधे तु श्रुतिरेव गरीयसी।
अविरोधे सदा कार्यं स्मार्तं वैदिकवत्सदा॥" इति।

---

ननु श्राद्धकरणं यदि स्मार्तमेव, तर्हि कथं तस्यानुष्ठेयत्वम्। न हि पौरुषेयी स्मृतिर्धर्मे प्रमाणम्। स्मृतीनामपि वैदिकमन्वादिप्रणीतानामनुमितवेदद्वारा प्रामाण्यमपि तदैव स्यात्, यदि ताः असम्भाव्यमानदृष्टहेतुकाः स्युः। लोभादिमूलका अपि हि स्मृतयो बहुलमुपलभ्यन्ते। "हेतुदर्शनाच्चे"ति जैमिनिसूत्रमप्यत एवोपपद्यते। "औदुम्बरी सर्वा वेष्टितव्ये"ति स्मृतिरपीत एव व्याख्याता। न हि तत्रापि श्रुतिमूलतया प्रामाण्यमस्ति। तथाच का स्मृतिः प्रमाणम्? का चाप्रमाणम्? इति न व्यवस्थेत्याशङ्क्याह— **श्रुतीति**।

इयमत्र व्यवस्था—श्रुत्यविरुद्धा स्मृतिः प्रमाणम्। तद्विरुद्धा दृष्टनिमित्ता च स्मृतिरप्रमाणमिति। तथाच श्राद्धकर्तव्यतास्मृतीनां वेदाविरुद्धानामनिमित्तान्तराणां च प्रमाणतैव वर्तत इति श्रौतमिव स्मार्तमपि कर्मानुष्ठेयमिति भावः।

इदं च श्राद्धं पित्रादित्रयजीवने न कर्तव्यं किन्तु एकद्विमरण

अत्र पित्रादित्रयमध्ये एकद्विमरणेऽपि चेत्पुरुषकमेव पार्वणम्, पित्रादित्रयजीवने तु अदानमेव।

तथाच विष्णुः—"पितरि जीवति यः श्राद्धं कुर्यात्, येषां पिता कुर्यात्तेषां कुर्यात् पितरि पितामहे च जीवति येषां पितामहः; पितरि पितामहे प्रपितामहे च जीवति नैव कुर्यात्"। इति।

---

एवेत्याह—**पित्रादीति**। अत्र च विष्णुवचनं प्रमाणयति—**तथाचेति**। अत्र हि सप्त कल्पा विवक्षिताः। तद्यथा—पितर्य्येव जीवति, अन्येषु प्रमीतेष्विति **प्रथमः कल्पः**। अत्र च पक्षे पितामहप्रपितामहपितृप्रपितामहानां पिण्डदानम्।

**द्वितीयः** पितरि पितामहे च जीवति, प्रमीते प्रपितामहे इति। अत्र तु प्रपितामह-पितामह पितामह-पितामहप्रपितामहानां पिण्डदानम्।

**तार्त्तीयस्तु** त्रितयजीवनेन, यत्र न कस्यापि पिण्डदानम्। जीवत्पितृकस्य त्रितयजीवने न वृद्धिश्राद्धेऽप्यधिकार इति यावत्।

यदा केवलं पिता प्रैति, पितामहप्रपितामहौ च जीवतः तदा **चतुर्थः कल्पः**। अत्र च पित्रे एकं पिण्डं अपरं द्वितयं प्रपितामहात्परं द्वाभ्यां देयमिति निष्कर्षः।

**पञ्चमपक्षस्तु** पितृपितामहयोर्मृतयोर्जीवति च प्रपितामहे सम्भवति, यत्र पितृपितामहाभ्यां पिण्डद्वयदानसमनन्तरं पितामहपितामहायापरं देयम्।

अत्र यः श्राद्धं कुर्यादित्यनेनाकरणपक्षोऽपि सूचितः ।

**यस्य पिता प्रेतः स्यात् स पित्रे पिण्डं निधाय प्रपितामहात्परं द्वाभ्यां दद्यात् ।**

अत्र च पितैव प्रेतो न पितामहप्रपितामहावित्येवकारो द्रष्टव्यः । **यस्य पिता पितामहश्च प्रेतौ स्याताम्, स ताभ्यां पिण्डौ दत्वा [1]पितामहपितामहाय दद्यात् ।**

अत्राप्येवकारात्प्रपितामहजीवनं [2]गम्यम् ।

**यस्य पितामहः प्रेतः स्यात् स तस्मै पिण्डं निधाय प्रपितामहात्परं द्वाभ्यां दद्यात् ।**

अत्राप्येवकारोऽध्याहार्यः ।

---

**अयमत्र षष्ठः कल्पः**— यः केवलं पितामहे प्रमीते ध्रियमाणयोश्च पितृप्रपितामहयोरवसरं लभते । अस्मिन्हि कल्पे पितामहाय पिण्डं दत्वा प्रपितामहात्परं द्वाभ्यां पिण्डद्वयं देयम् ।

पितृप्रपितामहयोर्मृतयोर्जीवति च पितामहे **सप्तमः पक्षः**, यत्र पितृप्रपितामहाभ्यां पिण्डौ दत्वा पितामहपितामहायापरं देयमिति निर्णय इति विष्णुवचनतात्पर्यं मनसि निधायाह—

**अत्र चेति ।** अयमाशयः— अन्तर्हितेभ्योऽनन्तर्हितेभ्यो वा प्रेतेभ्यस्त्रिभ्यः क्रमेण पिण्डदानं कर्तव्यमिति ।

---

१ (ख) वृद्धप्रपितामहाय । २ (ख) अवगम्यम् ।

**मातामहानामप्येवं श्राद्धं कुर्याद्विचक्षणः**
**मन्त्रोहेन यथान्यायं शेषाणां मन्त्रवर्जितम् ॥**

**एवम्** पित्रादिजीवने यः श्राद्धप्रकारः— यथा पितरि जीवति तत्पितृभ्यो दानं त्रिषु जीवत्सु न दानम्— तदनुसारेण । **यथान्यायम्** न्यायानुसारेण ।

---

मन्त्रोहेन यथान्यायमिति व्याचष्टे— **यथान्यायमिति** ।

अयं भावः— आतिदेशिकस्य मन्त्रसंस्कारान्यतरस्यान्यथाभाव ऊहः । तथाच मातामहश्राद्धेऽपि मन्त्रोहस्तदतिदेशेनैव भवतीति. मातामहश्राद्धस्य पितृपार्वणविकृतित्वमवश्यं यद्बोधनीयं तदर्थमाह मूले— **एवमिति** । पित्रादिजीवने इति तु तद्विवरणम् ।

श्राद्धमयूखे तु— "मातामहानामप्येवं तन्त्रं वै वैश्वदेविकम्" इति वचनानुसारेणातिदेशो वर्णितः । हेमाद्रौ पुनः— "न्यायप्राप्त ऊहे पुनर्वचनमेकप्रयोगतया तदप्राप्त्याशङ्कायामित्युक्तम् । सर्वथा तु ऊहोऽत्र सर्वसम्मत एव ।

अत्र "मन्त्रोहेने"ति वाक्येन सर्वेषां पितृशब्दघटितानां मन्त्राणां मातामहपदोहः प्रतीयते । एतमपि यत्र प्रकृतौ पितृपदं जनकपरं तत्रैवोहः, न तु यत्र सपिण्डीकरणान्तश्राद्ध-सम्पितृभावपरम् ।

तदुक्तं मयूखे—"द्विधा हि पितृशब्दः प्रयुज्यते, क्वचिज्जनक-त्वोपाधिना "पिता यस्य तु वृत्तः स्यादि"त्यादौ, क्वचित्सपिण्डी-

तद्यथा— असमवेतार्थत्वं प्रतिसन्धाय मन्त्रेषु पितृपदस्थाने मातामहशब्दप्रयोगः कार्यः, समवेतार्थत्वे तु नैवम् ।

तथा हि— "स्वधा स्थ तर्पयत मे पितॄन्" "आयन्तु नः पितरः" "एत पितरः" अत्र पितरः" "देवताभ्यः पितृभ्यश्च" इत्यादौ बहुवचनान्न जनकपरः पितृशब्दः, किन्तु पितृलोक-प्राप्तिनिमित्तत्वेन पित्रादिमातामहादिषु सर्वेष्वेव मुख्यः ।

करणान्तश्राद्धजन्यपितृत्वोपाधिना ; यथा "प्रेते पितृत्वमापन्ने सपिण्डीकरणादिति" । इत्यादौ । अत एव पितृशब्दः सपिण्डेषु प्रयुज्यते—" षड्भ्यः पितृभ्यस्तदनु भक्त्या श्राद्धमुपक्रमे"त् " पितृपात्रे प्रेतपात्रं प्रसेचयेदि"त्यादौ । तथाच कुत्र मन्त्रे जनकत्वोपाधिना पितृशब्दो वर्तते, कुत्र चान्योपाधिनेति विनिर्णयोऽत्रापेक्षित इति तदर्थमुपक्रमते—**तथाहीति । स्वधा स्थेति ।**

ननु कथमत्र जनकपरत्वमित्यत आह—**बहुवचनादिति** । अत्र बहुवचनमात्रं न जनकपरतां प्रतिषेधति, किंतु पृथक्पिता-महादिशब्दघटितमन्त्रान्तरासमवहितमेव तत् । अत एव— "शुन्धन्तां पितरः शुन्धन्तां पितामहाः" इत्यादौ बहुवचना-न्तोऽपि पितृशब्दो न जनकपर इति विशेषं मनसि निधायाह— **यत्र त्विति ।**

तथाचेदं सिद्धम्—यत्र जनकपरत्वं तत्रोहः यत्र तु न तत्परत्वं न तत्रोह इति । ननु "एत पितरः" इत्यत्रापि पितृशब्दो जन-कपरोऽपि लिङ्गसमवायाद्बहुवचनान्तः पितृपितामहप्रपितामहस-

अत एव— "षड्भ्यः पितृभ्यस्तदनु श्राद्धदानमुपक्रमेत्" इत्युक्तम् । ततश्च समवेतार्थत्वात् न मातामहादिपदोहः । यत्र तु "पितरिदं तेऽर्घ्यम्" "पितामहेदं तेऽर्घ्यम्" तथा "पितृभ्यः स्वधाऽस्तु" "पितामहेभ्यः स्वधाऽस्तु" इत्यादौ श्राद्धदातृसम्बन्धोपाधिना पित्रादिशब्दप्रवृत्तिः, तत्र मातामहादिष्वसमवेतार्थत्वात् "मातामहेदं तेऽर्घ्यं"मित्यादिमन्त्रोहः ।

"पितृभ्यः स्वधाऽस्तु" इत्येकस्मिन्नपि बहुवचनं "अदितिः पाशान्प्रमुमोक्तु" इतिवत् बहुवचनप्रयोगः ।

---

मुदाय एव वर्तितुं योग्य इति स कथं मातामहादिबोधकोऽपि विकृतौ स्यादित्यत आह— **षड्भ्य इति ।**

तथा च प्रकृतौ न लिङ्गसमवायेन पितृशब्दस्य पितामहादिपरत्वम्, किन्तु पितृलोकप्राप्तिनिमित्तेनैवेति तस्य प्रवृत्तिनिमित्तस्य मातामहादिसाधारण्यात्समवेतार्थत्वं विकृताविति भावः । ननु यत्र जनकत्वोपाधिना पितृशब्दो न प्रवृत्तः, तत्र भवतु बहुवचनं नामसमवेतार्थम्, यत्र तु जनकत्वोपाधिना, तत्र तस्य कथं समवेतार्थत्वं ? तथाच "पितृभ्यः स्वधाऽस्तु" इत्यादीनां कथमुपपत्तिरित्याशङ्कायामाह— एकस्मिन्नपीति । **अदितिरिति ।**

"अदितिः पाशं प्रमुमोक्तु" "अदितिः पाशान्प्रमुमोक्तु" इति शाखाभेदेन एकपशुकयागप्रकरणे मन्त्रद्वयं समाम्नायते । तत्र बहुवचनान्तपाशशब्दघटितस्य मन्त्रस्योत्कर्षो बहुपशुकयाग इति पूर्वपक्षयित्वा सिद्धान्तितम्— यत् बहुवचनस्य प्रकृत्यर्थोपसर्जन

तयाऽविवक्षितत्वेन नोत्कर्ष इति पूर्वमीमांसायां "गुणत्वन्याय्य-कल्पने"ति न्याय इति तेन न्यायेनात्रापि बहुवचनोपपत्तिरिति भावः ।

**पितरिदं तेऽर्घ्यमिति** । इदं "शुन्धन्तां पितर इत्यादे-रुपलक्षणम् । एतेन—मयूखे "अत्र पितामहचरणाः—"पितरिदं तेऽर्घ्यमि"त्यत्रोहानूहविचारानवकाशः; एतस्याभिलापमात्रत्वेन मन्त्रत्वाभावात्, अन्यथा "शेषाणां मन्त्रवर्जितमि"त्युक्त्वा शूद्राणां तदभिलापाप्रसक्तेः । अतोऽपौरुषेये वैदिकप्रसिद्धे मन्त्रे मन्त्रशब्दो मुख्योऽन्यत्र गौणः । अत एव भावार्थपादे ऊहाद्यमन्त्रत्वसिद्धान्त उपपद्यत इत्याहुः" इति—यदुक्तम्, तदपि न विरुद्धम् ।

वस्तुतस्तु—"पितरिदं तेऽर्घ्यमित्यस्यापि मन्त्रत्वमेव, शूद्रकर्तृक-श्राद्धादौ "पितरिदं तेऽर्घ्यमि"ति मन्त्राप्रयोग इष्ट एव । न हि तैः प्रयुज्यमानं "पितरिदं तेऽर्घ्यमिति वाक्यममन्त्र इत्येतावता त्रैवर्णिकप्रयुज्यमानस्याप्यस्यामन्त्रत्वमिति वक्तुं शक्यमिति तु प्रकाशकाराणां मतम् । अत एव "भ्रातरिदं तेऽर्घ्यमित्या-दीनामेव पुरुषबुद्धिप्रभवाभिलापत्वमुत्तरत्र वर्ण्यमानमुपपद्यते । तथाच "पितरिदं तेऽर्घ्यमित्यस्यान्योपलक्षणत्वमात्रं नाङ्गीक-रणीयं किन्तु स्वपरसाधारणोपलक्षणत्वमेवेति तु युक्तं प्रतिभाति ।

**एतेन**—मातामहश्राद्धादौ बहुवचनस्यापि नोहः; प्रकृताव-समवेतार्थत्वात् । अत एवोक्तम्—"अगम्ये नोहः" "तस्माद्दचं नोहेत्" इति, इति सिद्धान्तोऽपि—**व्याख्यातः** । तदुक्तं मयूखे "न च—प्रकृतावेकस्मिन् पितरि बहुवचनस्यासमवेतार्थत्वात्

विकृतावेकवचनान्त एव प्रयोज्य इति—वाच्यम्; प्रकृतौ बहुवचनस्यासमवेतार्थत्वे विकृतावप्यविकृतस्यैव प्रयोग इति नवमे पाशाधिकरणे स्थितत्वादि"ति।

ननु "एत पितर" इत्यादौ यदि बहुवचनान्तत्वेन पितृशब्दो न जनकपरः, तर्हि "पितृभ्यः स्वधाऽस्तु" "शुन्धन्तां पितरः" इत्यादावपि न जनकपरत्वं स्यादिति मातामहश्राद्धे तच्चोहः स्यादित्यत आह— **पितृभ्य इति।**

अत्रेदं विचारणीयम्— श्राद्धे देवतात्वं किं मृतानां जनकादीनामेव, उत तदधिष्ठानाग्निष्वात्तादीनां वस्वादीनामेव वेति। अत्र निर्णयसिन्धौ— "अत्र पित्रादिशब्दैर्जनकादीनामेव देवतात्वमुच्यते न वस्वादीनाम्; "असावेतत्ते यजमानस्य पित्रे" "असावेतत्ते यजमानस्य पितामहाये"त्यादि शतपथश्रुतेः, 'यस्य पिता प्रेतः स्यात् स पित्रे पिण्डं निधाये"ति विष्णुस्मृतेश्च।

यत्तु मनुदेवलौ—

"वसवः पितरो ज्ञेया रुद्रा ज्ञेयाः पितामहाः।
प्रपितामहास्तथादित्याः श्रुतिरेषा सनातनी"॥ इति॥

यच्च याज्ञवल्क्यः—

"वसुरुद्रादितिसुताः पितरः श्राद्धदेवताः" इति, तदभेदज्ञानार्थम्। इदं चाभेदज्ञानम्—

"विष्णुः पिताऽस्य जनको दिव्यो यज्ञः स एव हि।
ब्रह्मा पितामहो ज्ञेयो ह्यहं च प्रपितामहः"॥ इत्यादिवच-

नाविरोधार्थं समुच्चयेन विकल्पेन वा यथाचारं व्यवस्थेत्यादि-निरूपितम्।

शूलपाणिरपीममेवार्थं स्पष्टं निरूपयति। इयान्विशेषः—यत् मन्वादिवचनानां स्मृतित्वात्, "असावेतत्ते" इत्यादीनां श्रुतित्वात्,

"श्रुतिस्मृतिविरोधे तु श्रुतिरेव गरीयसी"॥

इति कात्यायनवचनात् मन्वादिवचनान्यन्यथैवाभेददृष्ट्यर्थतया नेयानीति तत्र निरूपितम्।

हेमाद्रौ तु—प्रथमतो "नापि श्राद्धदेवतास्वरूपेषु यजमानस्य पितृपितामहप्रपितामहेष्वग्निष्वात्ताद्यभेददृष्टिर्विधीयते; तदनुगुणानां श्रुतिलिङ्गादीनामभावात्, न ह्या"दित्यं ब्रह्मोपासीते"ति वत्पित्रादिषु सोमपादिदृष्टिः कर्तव्यतयोपदिश्यते। यदपि मनुदेवलादिवचनेषु वस्वादीनां पित्रादिभिः सहाभेदविधानम्, तदपि न पित्रादिषु वस्वादिदृष्टिः कर्तव्येत्येवं परम्; 'आदित्यो यूपः" इति वत्प्राशस्त्यपरतयाऽप्युपपत्तेः' इत्यभेददृष्टिविधानं खण्डयित्वा— "नापि अग्निष्वात्तादीनां श्राद्धदेवतात्वस्यापि विधयः। यतः—

"स पुत्रः पितरं यस्तु जीवन्तमनुवर्तते।
संस्थितं तर्पयेद्भक्त्या श्राद्धेन विविधेन च॥"

इत्यादयः श्राद्धविधयो मृतानां मनुष्याणामेव देवतात्वमवगमयन्ति। अत एव "पित्रे" "पितामहाये"त्यादिचतुर्थ्यन्तपद-प्रयोगोऽपि साधीयान् भवती"ति सयुक्तिकं जनकादीनामेव

यदि तु "पितृभ्यः स्वधा" इति बहुवचनानुरोधेन पितृलोकप्राप्त्या पितृशब्दः सर्वेषु वर्त्तते, तदा "पितामहेभ्यः" इत्याद्यवाच्यं स्यात्; पौनरुक्त्यापत्तेः।

"एत पितरः" इत्यादेश्चाग्निष्वात्तादिपरत्वे तु सुतरा

---

देवतात्वमपि स्पष्टं निरूप्य— श्रुतिलिङ्गवाक्यैस्त्रिभिरपि पुनरपि हरिहरादिमतानुसारेणाग्निष्वात्तादीनामेव देवतात्वं समर्थ्य— "अभेददृष्ट्यो वैते। अयं तु पक्षः सिद्धान्ततयाभ्युपगन्तुं न्याय्यः। अयमेव ह्याचारे दृश्यते। अयमेव सर्वेषां विश्वरूपादीनां सम्मतः। अयमेव ह्यनवद्यः; न्यायो हि स्तावकत्वाद्विधिपरत्वमिति पूर्वमेवोक्तम्। "आदित्यो यूप" इति वाक्ये यूपेऽपि यदि नाम तथा स्यात्, तदा किं नाम कर्मणो हीयेत? परं सगुणत्वमेव भवेत्" इति वर्णितम्।

तथाच निर्णयसिन्धुशूलपाणिविश्वरूपहेमाद्र्यादिसम्मतः पक्षः जनकादिदेवतात्वपक्ष एवेति तन्मतरीत्या "पितरिदं तेऽर्घ्यमि"-त्यादौ ऊहं निरूप्य मिताक्षरादिसम्मतवस्वादिदेवतात्वपक्षेण "पितरिदं तेऽर्घ्यमि"त्यादावपि नोहप्रसक्तिरिति निरूपयति—

**एतेति॥ अग्निष्वात्तादीनि॥ एतद्वः पितरो वास इति॥**

अत्रापि पितृशब्दस्य वस्वादिपरत्वेऽपि यथा बहुवचनमविवक्षितं तथा पितृपदमपि; पितृमातामहादिशब्दानां वस्वादिपर्यायत्वा-दिति मातामहादिश्राद्धे नोह आवश्यक इति भावः। अनेन वस्वादिदेवतात्वे जनकादिदेवतात्वे च फलभेदोऽपि सूच्यते।

अत्र परिशिष्टप्रकाशकाराः आचारेऽपरिदृश्यमानोऽपि वस्वादिदेवतात्वपक्ष एव न्याय्य इति "अग्निष्वात्तादिपरत्वे तु" इति तु शब्देन गमयन्ति ।

अयमेतेषामाशयः— मन्वादिवचनानामभेदज्ञानार्थत्वं हेमाद्रौ यद् व्यवस्थापितं तच्चान्ततः— "आदित्यो यूप" इत्यादावपि यूपे आदित्याभेदज्ञानमेव विवक्षितं चेदपि न हानिरिति हेमाद्रावुक्तमिति सर्वविदितमिदम् । तत्र च तत्सिद्धिपेटिकाधिकरणवैयर्थ्यमपरिहरणीयमेव । अभेददृष्टौ श्रुतिलिङ्गादिकं किमपि नास्तीति यदुक्तं हेमाद्रौ तस्य तु खण्डनं न कृतमेव तत्रापि । न हि हेमाद्रौ अग्निष्वात्तादिदेवतात्वे यानि श्रुतिलिङ्गादीनि निरूपितानि तेषां स्वरसं गत्यन्तरमुक्तम् । तथाचाग्निष्वात्तादिदेवतात्वपक्ष एव साधीयान् ।

तदुक्तं मिताक्षरायाम्— "न ह्यत्र देवदत्तादय एव श्राद्धकर्मणि सम्प्रदानभूताः पित्रादिशब्दैरुच्यन्ते, किंत्वधिष्ठातृवस्वादिदेवतासहिता एव । यथा देवदत्तादिशब्देन शरीरमात्रं नाप्यात्ममात्रं किं तु शरीरविशिष्टा आत्मान उच्यन्ते, एवमधिष्ठातृदेवतासहिता एव देवदत्तादयः पित्रादिशब्दैरुच्यन्ते । अतश्चाधिष्ठातृदेवता वस्वादयः पुत्रादिभिर्दत्तेनान्नपानादिना तृप्ताः सन्तस्तानपि देवदत्तादींस्तर्पयन्ति, कर्तॄंश्च पुत्रादीन् फलेन संयोजयन्ति । यथा माता गर्भपोषणायान्यदत्तेन दोहदान्नपानादिना स्वयमुपभुक्तेन तृप्ता सती स्वजठरगतमप्यपत्यं तर्पयति दोहदाशादिप्रदायिनश्च प्रत्युपकारफलेन संयोजयति, तद्वद्वसवो रुद्रा अदितिसुताः

आदित्या एव ये पितरः त एव पितृपितामहप्रपितामहशब्दवाच्याः; न केवलं देवदत्तादय एव श्राद्धदेवताः श्राद्धकर्मणि सम्प्रदानभूताः, मनुष्याणां पितॄन्देवदत्तादीन् स्वयं श्राद्धेन तर्पितास्तर्पयन्ति ज्ञानशक्तिशयोगेन" ॥ इति ।

हरिहरादयोऽपि इममेवार्थं मन्यन्त इति हेमाद्रावेव वर्णितम् ।

यत्तु शूलपाणिना—"श्रुतिस्मृतिविरोधे तु" इति कात्यायनवचनमपि स्वावलम्बतया स्वीकृतं तदिदम्—"यत्र पुनर्लिङ्गं च प्रत्यक्षं श्रुतिस्त्वानुमानिकी, तत्र कथम्? श्रुतिरेव बलीयसी"ति तन्त्रवार्तिकसिद्धान्तविरुद्धम् । विधिपरयोः खलु श्रुतिस्मृत्योः श्रुतिर्बलीयसीति कात्यायनवचनेन निरूपितम्, न तु श्रौतमन्त्रलिङ्गविधिपरस्मृत्योर्विरोधेऽपि ।

श्रुतिरेषा सनातनी"ति वदन् भगवान् मनुर्हि वस्वादिदेवतात्वमपि सनातनवेदसिद्धमेव निरूपयतीति कथं मनुवचनस्य श्रुत्यन्तरविरोधेनान्यथा नयनम्? मनुर्हि भगवान् "आसावेतत्ते यजमानस्य पित्रे" इत्यादिशतपथश्रुतिगतपित्रादिपदानामेव वस्वादिपरत्वं व्यवस्थापयति ।

तथाच निबन्धकर्त्तां व्यवस्थापेक्षया स्मृतिकाराणां व्यवस्थायाः प्रबलत्वात् मन्वादिवचनानामन्यथानयनं निबन्धनकाराणां न सङ्गतं पश्यामः । स्मृतिवचनानि ह्युपदेशरूपाणि न मन्वादिभिः स्वबुद्धिकल्पितानि परीक्षारूपाणि निबन्धनवचनानीवेति वस्वादिदेवतात्वपक्षमेव वयमपि समुचितं पश्यामः । तथाच पितृमाता-

मनूहः। "एतद्वः पितरो वासः" इत्यत्रापि प्रतिपिण्डं मन्त्रविनियोगात् पितृलोकप्राप्तिनिमित्तत्वेऽप्येकपरत्वात् बहुवचनमसमस्तप्रयोगसाधुता।

---

महादिशब्दानां वस्वादिपरत्वपक्षे सुतरामनूहो न्यायसिद्ध इति परिशिष्टप्रकाशकाराणां सिद्धान्तो नानुपपन्नः इति सिद्धम्।

अस्मिन्पक्षे "मातामहानामप्येवमि"ति वचनानुसारेण ऊहकल्पनं न्यायासिद्धमपि वाचनिकत्वान्मातामहादिश्राद्धे नानुपपन्नम्। यथान्यायमित्यस्य तु न विवक्षा।

इदं उक्तविष्णुवचने मन्त्रोहेनेति पाठमङ्गीकृत्योक्तम्। मन्त्रोहेनेति पाठे तु यथान्यायमित्यस्य बहुवचनस्यासमवेतार्थत्वं प्रतिसन्धायेत्यर्थः। तथा च उक्तवचनानुसारेण मातामहादिश्राद्धे "पितृभ्यः स्वधास्त्वि"त्यादौ एकवचनवत एव मातामहादिशब्दस्य प्रयोगोऽनुसन्धेयः।

ननु "पितृभ्यः स्वधाऽस्तु" इत्यादावपि बहुवचनेन अग्निष्वात्तादिसर्वपरत्वस्यैवावश्यकत्वात्कथं तत्र बहुवचनस्यासमवेतार्थत्वम्? तथाच "पितामहेभ्यः स्वधाऽस्तु" इत्यादिवैयर्थ्यमपि समापतितमित्यत आह— **एतद्व इति**। इदं "पितृभ्यः स्वधाऽस्त्वि"त्यादीनामप्युपलक्षणम्। **पितृलोकेति**। अग्निष्वात्तादिपरत्वेऽपीत्यर्थः। एकपरत्वे हेतुमाह— **प्रतिपिण्डं मन्त्रविनियोगादिति**। लिङ्गाच्छ्रुतेर्बलीयस्त्वादिनुयोगानुसारेण बहुवचनस्याप्येकपरत्वं "कदाचने"ति मन्त्रे इन्द्रपदस्याग्निपरत्वमिवेति भावः।

तथाच ब्रह्मपुराणम्—

"एतद्वः पितरो वासस्त्विति जल्पन्पृथक् पृथक् ।

अमुकामुकगोत्रेत्युक्त्वा वासः पठेत्तदा ॥" इति ।

एवं सांवत्सरिकैकोद्दिष्टेऽपि "एतद्वः पितर" इत्येव प्रयोगोऽविकृतो यथाप्रकृति, प्रेतश्राद्धे तु प्रातिपदिकस्यासम- वेतार्थत्वात् प्रेतपदोहः, बहुवचनं तु यथाप्रकृत्येव ।

---

उक्तमन्त्रे बहुवचनस्यैकपरत्वे ब्रह्मपुराणवचनमपि प्रमाणयति-- **तथाचेति** । यदि तु मातामहादिश्राद्धे "मन्त्रोहेन यथान्याय- मि"त्यूहविधानोपपत्त्यर्थं अग्निष्वात्तादिदेवत्वेऽपि पित्राद्यधिष्ठानत्वेन मातामहाद्यधिष्ठानत्वेन च वस्त्रादीनां भेद एवाङ्गीक्रियते, तदा प्रातिपदिकस्याप्यसमवेतार्थत्वेनोहविधानमुपपन्नमेव ।

ननु सांवत्सरिकैकोद्दिष्टे "एतद्वः पितर" इत्यत्रैकवचनान्तोहः अपेक्षित एव । अतएव— "एकवन्मन्त्रानूहेतैकोद्दिष्टे" इति विष्णुवचनमुपपद्यते । अस्यार्थः— एकोद्दिष्टे— एकोद्दिष्टश्राद्धे चयाहादौ क्रियमाणे मन्त्रान् **एकवत्** यथा भवति तथोहेतेति क्रियाविशेषणमिति व्यक्तं मयूखे, इत्यत आह— **एवमिति** ॥

**सांवत्सरिकैकोद्दिष्ट इति** ॥

"एकोद्दिष्टं च कर्तव्यं पित्रोश्चैव मृतेऽहनि ।

एकोद्दिष्टं परित्यज्य पार्वणं कुरुते नरः ॥

अकृतं तद्विजानीयाद्भवेच्च पितृघातकः ।" इति व्यासवचन- सिद्ध इति भावः ।

निर्णयसिन्धौ— अत्र औरसक्षेत्रजयोः पार्वणम्, दत्तकादीना- मेकोद्दिष्टमित्येकः पक्षः; साग्नेः पार्वणं निरग्नेरेकोद्दिष्टमित्यपर इत्यादिकं यदुक्तं तदप्यत्रानुसन्धेयम् ।

**इत्येवेति** । बहुवचनान्त एवेत्यर्थः । अयं भावः— पुराणैको- द्दिष्टं पार्वणवदेवानुष्ठेयम्, प्रेतैकोद्दिष्ट एव तूक्तवचनेन प्रेतैकवच नयोरूहविधानात्, तत्र सपिण्डीकरणेन पितृत्वानुपपत्तेः । अत एव आश्वलायनेन पितृपदनिवृत्तिरुक्तेति ।

यत्तु मयूखे— अस्य वाक्यस्य प्रेतैकोद्दिष्टविषयत्वे प्रमाणाभावात् प्रेतशब्दोहाप्रतीतेः, उभयविधाने वाक्यभेदात्पुराणैकोद्दिष्टेऽपि पितृपदप्रयोगवद्बहुवचनान्तप्रयोगस्यापि नवमपाशाधिकरणन्यायेन सिद्धत्वात्— इत्युक्तम्, तत्र बहुवचनस्य प्रेतैकोद्दिष्टविषयत्वस्यैव युक्तत्वात् विशिष्टविधानेन वाक्यभेदाभावाच्च नोपपत्तिरिति तु प्रकाशकाराणामाशयः ।

ऊहविधानं होदं यथान्यायमेव विष्णुवाक्ये विवचितमित्येक- वचनोहस्य न्यायासिद्धत्वात् वस्तुगत्या प्रेतश्राद्धेऽपि नैकवचनस्योहो युक्त इत्यभिप्रायेणाह— **प्रेतश्राद्धे त्विति । प्रातिपदिकस्या- समवेतार्थत्वादिति** । अग्निष्वात्तादिदेवत्वपक्षेऽपि सपिण्डी- करणात्पूर्वं तेषां देवदत्तादितादात्म्याभावान्न पितृपदेन तद्ग्रहण- मिति भावः ।

**बहुवचनं त्विति** । निर्णयसिन्धौ तु— "एकवन्मन्त्रानूहेतै- कोद्दिष्टे" इति विष्णूक्तेरूहः, अत्र बहुवचनस्याप्यूहो वचनादि'ति वर्णितम् । 'शेषाणां मन्त्रवर्जितमि'ति भागः हेमाद्रौ— "पितृ-

**शेषाणाम्**। श्राद्धादीनाम्। **मन्त्रवर्जितम्** "एत पितरः" "अमी मदन्त पितरः" "स्वधा पितृभ्यः" इत्यादि-मन्त्रवर्जितम्। श्राद्धं कार्यम्। "पितरिदं तेऽर्घ्यम्" इत्यस्यापि

---

मातामहव्यतिरिक्तानामूहितमन्त्रवर्जितं पितृपदवानेव मन्त्रः स्यादित्यर्थः। अत्र च संख्योहवचनं लिङ्गम्, न पुनः पितृव्यादिश्राद्धे मन्त्रनिषेधः" इति व्याख्यातम्।

शूलपाणिस्तु—"एवं पितृव्याद्येकोद्दिष्टे ऊहयोग्यपितृपदयुक्त-मन्त्रपर्युदासार्थः" इति व्याचष्टे॥

"पितृव्याद्येकोद्दिष्ट एवावाहनादिमन्त्राणां पर्युदासार्थ" इति कल्पतरुः।

श्राद्धमयूखे तु—"भोगस्त्रीणां शूद्रापुत्रस्य चैकोद्दिष्टे मन्त्र-पर्युदासार्थमिति पितामहचरणाः;

"स्त्रीणाममन्त्रकं श्राद्धं तथा शूद्रासुतस्य च।
प्राग्दिशाच्च मतादिष्टात् ते च कुर्युः सदैवतम्॥" इति

मरीचिस्मरणात्" इति निरूपितम्।

तत्रोक्तविष्णुवचने मन्त्रोहेनेति पाठमेव मनसि निधाय पितृ-पदवत्सर्वमन्त्रनिषेध एव शास्त्रीयः, न तु हेमाद्रिकृद्रीत्या पितृ-पदवानेव मन्त्रः स्यात् इत्यर्थः, न वा भोगस्त्रीशूद्रापुत्रैकोद्दिष्ट-विषयमन्त्रपर्युदासार्थत्वमुक्तवचनस्य मयूखोक्तरीत्या; शेषपदार्थसंकोचे प्रमाणाभावात्, इत्यभिप्रायेणाह—**शेषाणामिति**। श्राद्धादीना-मित्यर्थः। आदिपदेन पितृव्यादिग्रहणम्।

भ्रात्रादिपक्षे बाध एव, न तु "भ्रातरिदं तेऽर्घ्यमि"ति स एव मन्त्रो विकृतः, किन्त्वन्य एवायं श्राद्धकर्तृबुद्धिप्रभवोऽभिलापः ।

तथा च हारीतः— "मनसा सङ्कल्पयति वाचा चाभिलपति कर्मणा चोपपादयती"ति । एवं च प्रत्यभिज्ञाऽपि कल्पसूत्र इव बाध्या, मन्त्रवर्जितमिति बाधकवचनम् ।

पितरि पितामहे च वृत्ते द्वयोः सपिण्डे[1]नोत्तरं श्राद्धं पार्वण-विधिना दद्यादित्युक्तम् ।

---

यत्तु कल्पतरौ— "आवाहनादिमन्त्रवर्जितमि"ति व्याख्यातम्; यत्रोहयोग्यपितृपदवन्मन्त्र एव न प्रयोज्यः, नोहः । नापि पितृपदर-हितप्रयोज्य इति शूलपाणिनोक्तम्, तदुभयमपि मन्त्रविशेषसंकोचे प्रमाणाभावान्नोपपन्नमित्यभिप्रायेणाह— **एत पितर इति** ।

ननु यदि "भ्रातरिदं तेऽर्घ्यमि"त्यादीनां सोहमन्त्रत्वाभावः, कथं तर्हि तत्प्रयोग इत्यत आह— **अन्य इति** ॥ यथासङ्कल्पमभि-लापो हारीतस्यापि सम्मत इत्याह— **तथा चेति** ॥ ननु "भ्रात-रिदं तेऽर्घ्यमि"त्यादौ मन्त्रत्वप्रत्यभिज्ञासत्त्वात् कथं तदमन्त्रत्वमित्यत आह— **प्रत्यभिज्ञापीति** ।

**कल्पसूत्र इवेति** । यथा हि कल्पसूत्रादीनामध्ययननिय-मादितो गृहीतानां मन्त्रयज्ञादिविषयाणां च प्रत्यभिज्ञायमानमपि वेदत्वं कल्पसूत्राधिकरणे स्मृतिपादे नास्तीति व्यवस्थापितम्, तथाऽत्रापीति भावः ।

---

१ यद्विगुणोत्तरम् ।

